योगवार्त्तिकम्

**न च चित्तेन चित्तग्रहणे कर्मकर्त्तृविरोधः, वृत्त्या चित्तस्य ग्रहणेन कर्मकर्त्रोर्भेदात्। न चैवमेकया वृत्त्या वृत्त्यन्तरग्रहणसंभवे पुरुषकल्पनावैयर्थ्यम्, नियमेन वृत्तिगोचरवृत्तिकल्पनेऽनवस्थायाः सूत्रेण[1] वक्ष्यमाणत्वादिति। ननु निरोधे कैवल्यप्रलयादिष्विव वृत्त्यभाव एव सर्वस्यां सुषुप्तौ कथं न स्वीक्रियते? नतु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येदिति सौषुप्तश्रुतावपि तदानीं ज्ञानाभावस्यैवावगमादित्याशङ्क्याह—सा तु संप्रबोध इति। सा तु निद्रा प्रत्ययविशेष एव, जागरे स्मरणादित्यर्थः। अत एव—**

**त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत्**

**इत्यादिश्रुतयः सुषुप्तस्थानेऽपि भोग्यमस्तीत्याहुः। न चैवं श्रुत्योर्विरोध इति वाच्यम्, अर्धसमग्रभेदेन सुषुप्तेर्द्वैविध्यात्, मुग्धेऽर्द्धसम्पत्तिरिति सुषुप्तिप्रकरणस्थवेदान्तसूत्रात्। अन्यथा श्रुत्योर्विरोधस्यापरिहार्यत्वाच्च कदाचिद्गाढतमसा चित्तसत्त्वस्य तमोगोचरवृत्तावप्यसामर्थ्यं च संभवत्येवेति। यत्त्वाधुनिका वेदान्तिब्रुवा आहुः—सुषुप्तौ तमः साक्षिभास्यमेव न तत्र वृत्तिरस्तीति, तन्न; वक्ष्यमाणस्मरणानुपपत्तेः, साक्षिण्यपरिणामिनि संस्कारस्मृत्योरनभ्युपगमात्। यच्च तदेकदेशी सुषुप्तावज्ञानाख्यप्रकृतेरेव वृत्तिमाह न तु चित्तस्य, तदपि हेयम्-एवं सति जाग्रत्स्वप्नयोरपि तस्या एव वृत्तिसंभवे चित्तकल्पनावैयर्थ्यादिति। तस्माज्जाग्रत्स्वप्नयोरिव सुषुप्तेऽपि चित्तस्यैव वृत्तिः,**

**जाग्रत्स्वप्नः सुषुप्तं च गुणतो बुद्धिवृत्तयः[2]**

**इति स्मृतिभ्यश्च, तथा चित्तत्वेनैव वृत्तिसामान्ये हेतुतायां लाघवाच्चेति।**

**शङ्का**—चित्त के द्वारा चित्त का ही ग्रहण मानने पर कर्तृ-कर्म-विरोध की आपत्ति आयेगी? अर्थात् एक ही चित्त का कर्तृत्व और कर्मत्व कैसे उपपन्न हो सकेगा?

**समाधान**—ऐसी बात नहीं है, क्योंकि वृत्ति के द्वारा चित्त का ग्रहण (ज्ञान) होने से कर्त्ता और कर्म का भेद हो जाता है। अर्थात् वृत्तिरूप कर्त्ता द्वारा चित्तरूप कर्म का ज्ञान होने से कर्तृकर्मविरोध की असंगति नहीं आती है।

**शङ्का**—(सिद्धान्ती के कथनानुसार वृत्ति के द्वारा चित्त का ग्रहण मानने पर) एक वृत्ति से वृत्त्यन्तर का ग्रहण हो जाने पर पुरुष की कल्पना व्यर्थ है?

**समाधान**—ऐसा नहीं है, क्योंकि नियमतः वृत्तिविषयक वृत्ति की कल्पना करने में समुपस्थित (आड़े हाथ आने वाले) अनवस्थादोष का सूत्र द्वारा आगे प्रतिपादन किया जायेगा।

---

1. ख ग घ – **एव (सूत्रेण** पश्चात्) उपलभ्यते, क च छ – **एव** नोपलभ्यते।
2. ख – **तासां विलक्षणो जीवः साक्षित्वेन व्यवस्थितः ( बुद्धिवृत्तयः** पश्चात्) उपलभ्यते, क ग घ च छ – **तासां.......स्थितः** नोपलभ्यते।

**शङ्का**–निरोध होने पर (निरुद्धभूमिक चित्त की समस्त वृत्तियों के निरुद्ध होने पर) जैसे कैवल्य और प्रलय आदि की अवस्था में वृत्त्यभाव स्वीकार किया जाता है वैसे ही निरोधरूप सुषुप्ति की सभी अवस्थाओं में वृत्त्यभाव को ही क्यों न स्वीकार किया जाय? अर्थात् सुषुप्ति में चित्त को निर्वृत्तिक ही मानना चाहिए। क्योंकि निम्नाङ्कित सुषुप्तिबोधक श्रुति में भी उस समय चित्त को ज्ञानाभावरूप ही प्रतिपादित किया गया है। श्रुति है–'**न तु...पश्येत्**' अर्थात् 'सुषुप्ति में कोई दूसरा तत्त्व है ही नहीं, जिसे चित्त (सौषुप्त पुरुष) अपने से भिन्न रूप से देख सके।'

**समाधान**–उक्त शङ्का होने पर (समाधानरूप में) भाष्यकार बतलाते हैं–'**सा तु संप्रबोध इति**।' चित्त की यह निद्रावस्था ज्ञानविशेष (वृत्तिविशेष) ही है, क्योंकि जाग्रत् अवस्था में (तदवस्थाक अनुभूत पदार्थ का) स्मरण होता है। इसीलिए श्रुतिवाक्यों द्वारा भी सुषुप्तस्थान अर्थात् चित्त की सुषुप्ति अवस्था में भोग्य की सत्ता बतलाई गई है। श्रुति है-'**त्रिषु...यद्भवेत्**'' अर्थात् तीनों धामों (जाग्रत्, स्वप्न तथा सुषुप्ति–इन तीनों स्थानों में) जो भोग्य, भोक्ता तथा भोग रूप है।'

**शङ्का**–सुषुप्ति में भोग्य की सत्ता मानने पर '**न तु...द्वितीयमस्ति**' अर्थात् 'सुषुप्ति में कुछ भी दूसरा नहीं रहता है'–इत्याकारक श्रुति से अन्तर्विरोध होगा?

**समाधान**–ऐसा नहीं कहना चाहिए, क्योंकि सुषुप्ति दो प्रकार की है–अर्द्ध सुषुप्ति तथा समग्र सुषुप्ति। यह बात वेदान्त सूत्र के सुषुप्तिप्रकरण में '**मुग्धेऽर्द्धसम्पत्तिः**' ३/२/१० सूत्र से कही गई है। अन्यथा श्रुतियों के अन्तर्विरोध का परिहार असम्भव हो जायेगा अर्थात् श्रुतियों में सैद्धान्तिक सामञ्जस्य की स्थापना नहीं की जा सकेगी तथा कभी-कभी अत्यन्त घनीभूत तमोगुण के कारण चित्तसत्त्व (अर्थात् तमोबहुल चित्त) तमोविषयिणी वृत्ति को ग्रहण करने में समर्थ भी नहीं हो सकता है।

**पूर्वपक्ष**–और जो आधुनिक वेदान्ती लोग कहते हैं कि सुषुप्ति में तमोगुण साक्षिभास्य ही होता है अर्थात् साक्षी द्वारा तमोगुण ग्राह्य होता है, उस समय वृत्ति नहीं रहती है।

**उत्तरपक्ष**–यह पूर्वपक्ष भी ठीक नहीं है, क्योंकि (जागने पर चित्त को सुषुप्तिकालिक अनुभव का स्मरण होता है, इस प्रकार) आगे बतलाये जाने वाला स्मरणज्ञान उपपन्न नहीं हो पायेगा तथा अपरिणामी साक्षी में संस्कार और स्मृति को स्वीकार नहीं किया गया है। (अतः सुषप्ति से जाग्रत् अवस्था में आने पर स्मरण नहीं बन पायेगा)।

**पूर्वपक्ष**–और जो वेदान्तैकदेशी सुषुप्ति में अज्ञानसंज्ञक प्रकृति (माया) की वृत्ति को बतलाते हैं, न कि चित्त की।

**उत्तरपक्ष**–तो यह कथन भी युक्तियुक्त नहीं है अर्थात् उपेक्षणीय है। क्योंकि इस अवधारणा के अनुसार जाग्रत् और स्वप्नावस्था में भी अज्ञानाख्य प्रकृति की ही वृत्ति मानने की अपरिहार्यता आने पर चित्त की कल्पना ही व्यर्थ हो जायेगी। इन तर्कों के आधार पर यह सिद्धान्तित होता है कि जाग्रत् और स्वप्नकालिक चित्तवृत्तियों के समान सुषुप्ति में भी चित्त की ही वृत्ति बनती है। अर्थात् अज्ञानाख्य प्रकृति को नहीं, अपितु चित्त को ही ज्ञान होता है। स्मृतिवाक्यों से भी यही तथ्य परिपुष्ट होता है। स्मृतिवाक्य है– '**जाग्रत्...बुद्धिवृत्तयः**' अर्थात् 'त्रिगुणात्मक होने से जाग्रत्, स्वप्न और सुषुप्ति में बुद्धि अर्थात् चित्त की वृत्तियाँ होती है।' अगली युक्ति यह है कि वृत्तिसामान्य के प्रति चित्तत्वेन चित्त को हेतु मानने में लाघव (गुण) भी है।

सुषुप्ति में ज्ञान (वृत्ति) के सद्भावपूर्वक चैत्तिक परिणाम को ही युक्तियों द्वारा परिपुष्ट करने के पश्चात् सम्प्रति, वार्त्तिककार सुषुप्तिकालिक अनुभव के आधार पर होने वाले स्मरण को प्रतिपादित करते हैं–

## योगवार्त्तिकम्

**स्मरणाकारं पृच्छति–कथमिति। यस्याः[1] सत्त्वसचिवं तम आविर्भवति तस्याः सात्त्विक्या निद्राया उत्थितस्य स्मरणाकारमाह–सुखमिति। प्रसन्नं निर्मलं मनः स्वस्मिन् जायमानां प्रज्ञां यथाऽर्थवृत्तिं [2]विशारदीकरोति=सूक्ष्मार्थप्रतिबिम्बोद्ग्राहिणीं करोतीत्यर्थः। विशारदां करोतीति पाठस्तु साधुः।**

**शङ्का**–पूर्वपक्षी स्मरणज्ञान के स्वरूप के विषय में प्रश्न करता–'**कथमिति**।' जागरित अवस्था में किस प्रकार का स्मरण होता है?

**समाधान**–जिस निद्रा में सत्त्वमिश्रित तम का आविर्भाव होता है, उस प्रकार की सात्त्विकी निद्रा से उठे हुए व्यक्ति (चित्त) के स्मरणज्ञान के आकार को भाष्यकार बतलाते हैं– '**सुखमिति**।' 'प्रसन्न' अर्थात् निर्मल मन अपने में समुद्भूत (जायमान) 'प्रज्ञा' अर्थात् यथार्थवृत्ति को '**विशारदीकरोति**' अर्थात् सूक्ष्म पदार्थ के प्रतिबिम्ब को ग्रहण करने के लिये समर्थ (सक्षम) बना रहा है। वार्त्तिककार का मत है कि भाष्य में '**विशारदीकरोति**' यह पाठ शुद्ध नहीं है। '**विशारदां करोति**' इत्याकारक पाठ ही साधु (व्याकरणसम्मत) है।

**बालप्रिया**–

'**विशारदीकरोति विशारदां करोति**'– सरलार्थ यह है– भाष्य में प्रायः '**विशारदी-**

1. क च छ – **यस्याः**, ख ग घ – **यस्याम्**।
2. क ग घ च छ – **विशारदीकरोति**, ख – **विशारदां करोति**।

**करोति** पाठ उपलब्ध होता है, किन्तु यह पाठ व्याकरणसम्मत नहीं है। क्योंकि '**अभूततद्भावे च्विः**' के अनुसार 'जो पहले नहीं था, अब किया जा रहा है'–इस अर्थ में 'च्वि' प्रत्यय होता है, जैसे '**प्रकटीकरोति**' आदि। '**विशारदीकरोति**' यहाँ पर '**च्वि**' प्रत्ययान्त रूप का प्रयोग दार्शनिक दृष्टि से शुद्ध नहीं है। क्योंकि पहले चित्त, प्रतिबिम्ब को ग्रहण करने में समर्थ नहीं था, अब तथाकथित निद्रावृत्ति के द्वारा उसे विषयग्रहण में सक्षम बनाया जा रहा है, ऐसी बात नहीं है। अपितु सूक्ष्मार्थग्राही होने पर भी चित्त के आवरण को ही इस वृत्ति के द्वारा हटाया जा रहा है। अतः अभूततद्भावार्थक '**च्वि**' प्रत्ययान्त प्रयोग उचित नहीं है। अतः '**विशारदीकरोति**' के स्थान पर '**विशारदां करोति**' पाठ उचित है।

सम्प्रति, वार्त्तिककार रजोगुणप्रधान निद्रा से उठे व्यक्ति के स्मरण का स्वरूप बतलाते हैं–

### योगवार्त्तिकम्

**यस्यां रजःसचिवं तम आविर्भवति तस्या राजस्या निद्राया उत्थितस्य स्मरणाकारमाह–दुःखमिति। स्त्यानमकर्मण्यम्। तामस्या निद्राया उत्थितस्य स्मरणाकारमाह–गाढमिति। अलमत्यन्तं मुषितमिव परैरपहृतमिव तिष्ठतीत्यर्थः। अलसमिति पाठे तु स्त्यानता चित्तस्यातिचाञ्चल्येन कर्माक्षमता। आलस्यं तु तमोधर्मगुरुत्वेन कर्माक्षमता कर्मण्यनिच्छा [1]वेति भेदः।**

जिस निद्रावस्था में रजोबहुल तमोगुण का आविर्भाव होता है, उस रजोमयी निद्रा से उठे व्यक्ति (चित्त) के स्मरणज्ञान के आकार को भाष्यकार बतलाते हैं– '**दुःखमिति**।' यहाँ '**स्त्यान**' शब्द का अर्थ अकर्मण्य (कर्मशून्यता) है। तामसी निद्रा से उठे व्यक्ति (चित्त) के स्मरणज्ञान के आकार को भाष्यकार बतलाते हैं–'**गाढमिति**।' (भाष्य में '**अलसं**' के स्थान पर '**अलम्**' पाठ को दृष्टि में रखते हुए योगवार्त्तिककार अर्थ करते हैं–) '**अलम्**' अर्थात् अत्यन्त '**मुषित**' की भाँति अर्थात् दूसरों के द्वारा ठगे हुए के समान चित्त पड़ा रहता है। और जहाँ '**अलसम्**' ऐसा पाठ भाष्य में उपलब्ध होता है, वहाँ '**अलसम्**' का अर्थ स्त्यानता अर्थात् अतिचञ्चल होने के कारण चित्त की कर्म न करने की अनर्हता (विवक्षित) है। तमोधर्म की गुरुता से कर्म न करने की अक्षमता को आलस्य कहते हैं अथवा कर्म न करने की इच्छा को आलस्य कहते हैं। यही '**स्त्यान**' और '**अलस**' में अन्तर है। (भाव यह कि '**स्त्यान**' में रजोगुण की अधिकता के कारण कर्माक्षमत्व है और '**अलस**' में तमोबहुलता के कारण कर्माक्षमत्व है। अथवा पहले में कर्माक्षमता और दूसरे में कर्मानिच्छता है)।

---

1. क ग घ च छ – वा, ख – च।

सम्प्रति, जाग्रत् अवस्था में सुखादि का स्मरण होने पर सुषुप्ति में ज्ञान के सद्भाव में शङ्का करने वालों के मतवाद का खण्डन किया जा रहा है–

## योगवार्त्तिकम्

**ननु भवतु प्रत्यवमर्शस्तथाऽपि कथं सुषुप्तौ प्रत्ययसिद्धिस्तत्राह–स खल्विति। प्रत्ययानुभवे सूत्रोक्तस्याभावप्रत्ययस्यानुभवे[1]ऽसति सोऽयं प्रत्यवमर्शः खलु न स्यादित्यर्थः, संस्कारासंभवादिति भावः। ननु वृत्तिं विनाऽपि सुखादिवत् सुषुप्तौ स्वापस्य[2] साक्षिभास्यत्वमभ्युपगम्य तत्स्मरणमुपपादनीयमित्याशङ्क्याह–तदाश्रिता इति। तद्विषयाः प्रत्ययविषयिकाः स्मृतयोऽपि तदाश्रिताश्चित्ताश्रिता न स्युरन्यदृष्टस्यान्येनास्मरणादित्यर्थः। न च स्मरणमपि साक्षिण्येवास्त्विति वाच्यम्, तत्र संस्कारासंभवात् स्मृत्याख्यपरिणामासंभवाच्चेति।**

**शङ्का**–ठीक है, जाग्रत् अवस्था में (चित्त को) **'प्रत्यवमर्श'** अर्थात् स्मरणज्ञान रहे, फिर भी इसके आधार पर सुषुप्ति में ज्ञान (वृत्ति) की सत्ता किस प्रकार सिद्ध हो सकेगी? अर्थात् जाग्रत् अवस्था के स्मरणज्ञान से सुषुप्तिकालिक अनुभवात्मक निद्रावृत्ति को सिद्ध नहीं किया जा सकता है।

**समाधान**–इस पर भाष्यकार कहते हैं–**'स खल्विति।'** 'प्रत्ययानुभव' अर्थात् सूत्रोक्त वृत्त्यभाव के हेतुभूत तमोद्रव्य का अनुभव (ज्ञान) हुए विना **'सोऽयं'** अर्थात् 'वह यह है' इत्याकारक स्मरणज्ञान नहीं हो सकता है, क्योंकि अनुभव के विना तज्जन्य संस्कार भी सम्भव नहीं होता है।

**शङ्का**–जैसे वृत्ति के विना भी सुखादि साक्षिभास्य हैं, उसी प्रकार वृत्ति के विना सुषुप्ति में **'स्वाप'** को साक्षिभास्य स्वीकार कर (जाग्रदावस्था में) स्वापविषयक स्मरण को उपपन्न मानना चाहिये। (इस प्रकार सुषुप्ति में चित्त की निद्रावृत्ति नहीं माननी पड़ेगी)।

**समाधान**–पूर्वपक्षी के अनुसार इत्याकारक शंका करके भाष्यकार उसका समाधान करते हैं–**'तदाश्रिता इति।'** यदि तमोद्रव्यविषयिणी स्मृतियाँ भी चित्ताश्रित न हों तो **'अन्यदृष्ट'** अर्थात् साक्षी द्वारा दृष्ट का 'अन्य' अर्थात् चित्त के द्वारा स्मरण नहीं हो सकता है, (क्योंकि अनुभव और स्मरण में वैयधिकरण्य नहीं होता है)।

**शङ्का**–(अनुभव और स्मरण की उक्त व्यधिकरणप्रधान अनुपपत्ति के वारण के लिये यदि पूर्वपक्षी ऐसा कहे कि) स्वापानुभव के समान तद्विषयक स्मरण को भी साक्षिभास्य मान लिया जाय?

---

1. क घ च छ – **सति**, ग – **असति**, ख – **सति/असति** नोपलभ्यते।
2. क घ च छ – **स्वापस्य**, ग – **स्वीयस्य**, ख – **स्वापस्य/स्वीयस्य** नोपलभ्यते।

**समाधान**–पूर्वपक्षी को ऐसा नहीं कहना चाहिये, क्योंकि साक्षी में संस्कार तथा स्मृत्याख्य परिणाम दोनों सम्भव नहीं हैं।

इस प्रकार '**निद्रा**' के चित्तवृत्तित्व की स्थापना हो जाने के पश्चात् वार्त्तिककार निद्राख्यवृत्ति के निरोध को शंकासमाधानपूर्वक स्पष्ट करते हैं–

### योगवार्त्तिकम्

**ननु निद्रावृत्तिरपि तमस्येकाग्रा विषयदुःखशून्या चेति सा किमर्थं निरोद्धव्येत्याशङ्क्याह– सा चेति। इतरवृत्तिवत् सुखदुःखमोहात्मकत्वेन समाधिप्रतिपक्षत्वेन च निद्राऽपि समाधौ निरोद्धव्येत्यर्थः॥१०॥**

**शङ्का**–तमोमयी निद्रावृत्ति (मात्र तमोद्रव्य विषयिणी होने से) एकाग्र तथा विषयजन्य दुःख से शून्य है–अतः ऐसी निद्रावृत्ति किस कारण से निरोध के योग्य है?

**समाधान**–ऐसी आशंका करके भाष्यकार उत्तर देते हैं–'**सा चेति**।' सुख-दुःख-मोहात्मक होने से तथा समाधि की प्रतिबन्धक होने से चित्त की अन्य वृत्तियों की भाँति निद्रावृत्ति भी समाधि के इच्छुक के लिये निरोद्धव्य है॥१०॥

### योगसूत्रम्

## अनुभूतविषया[1]संप्रमोषः स्मृतिः॥११॥

## अनुभूत विषय का असम्प्रमोष अर्थात् तदनुरूप आकार से युक्त वृत्ति 'स्मृति' कहलाती है॥११॥

### व्यासभाष्यम्

**किं प्रत्ययस्य चित्तं स्मरति आहोस्विद्विषयस्येति? ग्राह्योपरक्तः प्रत्ययो ग्राह्यग्रहणोभयाकारनिर्भासस्[2]तज्जातीयकं संस्कारमारभते। स संस्कारः स्वव्यञ्जकाञ्जनस्तदाकारामेव ग्राह्यग्रहणोभयात्मिकां स्मृतिं जनयति। तत्र [3]ग्रहणाकारपूर्वा बुद्धिः। [4]ग्राह्याकारपूर्वा स्मृतिः। सा च द्वयी भावितस्मर्तव्या चाभावितस्मर्तव्या च। स्वप्ने भावितस्मर्तव्या। जाग्रत्समये त्वभावितस्मर्तव्येति। सर्वाश्चैताः[5] स्मृतयः**

---

1. **असंप्रमोषा**–इति पाठान्तरम्।
2. क च छ ज झ त थ द ध न ब भ म य – तत्, ख ग घ प फ र – **तथा**।
3. क ख ग घ च छ ज झ त द ध न प फ ब भ म य र – **ग्रहणाकार**$_0$, थ – **ग्रहणाकारा**।
4. क ख ग घ च छ ज झ त द ध न प फ ब भ म य र – **ग्राह्याकार**$_0$, थ – **ग्राह्याकारा**।
5. ग च छ ज झ त ध द ध न भ म य – **चैताः** उपलभ्यते, क ख घ प फ ब र – **चैताः** नोपलभ्यते।

**प्रमाणविपर्ययविकल्पनिद्रास्मृतीनामनुभवात्[1]प्रभवन्ति। सर्वाश्चैता वृत्तयः सुखदुःख-मोहात्मिकाः। सुखदुःखमोहाश्च क्लेशेषु व्याख्येयाः। सुखानुशयी रागः, दुःखानुशयी द्वेषः, मोहः पुनरविद्येति। एताः सर्वा वृत्तयो निरोद्धव्याः। आसां निरोधे संप्रज्ञातो वा समाधिर्भवत्यसंप्रज्ञातो वेति॥११॥**

(स्मृति के समय) क्या चित्त घटादिरूप विषय के ज्ञान का स्मरण करता है अथवा घटादि विषय का? (उत्तर है)–ग्राह्य विषय से उपरक्त होने पर भी प्रत्यय (विषयानुभव) ग्राह्य और ग्रहण इन दोनों के स्वरूप को निर्भासित अर्थात् प्रकाशित करता है और उसी प्रकार के संस्कार को भी उत्पन्न करता है। और वह (ग्राह्यग्रहणोभय) संस्कार अपने उद्बोधक से प्रेरित होकर अपने समान आकार वाली ही विषयविषयक और ज्ञानविषयक (ग्राह्यग्रहणोभयविषयक) स्मृति को उत्पन्न करता है अर्थात् चित्त विषय और विषय के ज्ञान इन दोनों का स्मरण करता है। (अनुभव और स्मृति में अन्तर भी है)–इनमें अनुभव ज्ञानाकारप्रधान होता है, जब कि स्मृति विषयाकारप्रधान होती है। यह स्मृति दो प्रकार की है–भावितस्मर्तव्या (मिथ्या पदार्थ का स्मरण करने वाली) तथा अभावितस्मर्तव्या (यथार्थ पदार्थ का स्मरण करने वाली)। स्वप्नावस्था में स्मृति अयथार्थ विषय वाली होती है और जाग्रत् अवस्था में स्मृति का विषय यथार्थ रहता है। (स्मृति वृत्ति का उल्लेख सबसे अन्त में इसलिये किया गया क्योंकि)–सभी स्मृतियाँ; प्रमाण, विपर्यय, विकल्प, निद्रा और स्मृतिजन्य अनुभव से उत्पन्न होती हैं। ये सभी वृत्तियाँ सुखात्मक, दुःखात्मक तथा मोहात्मक होती हैं। सुख, दुःख और मोह का व्याख्यान क्लेशों के प्रसंग में (विस्तार से) किया जायेगा। सुख का अनुगामी राग है, दुःखानुवर्ती द्वेष है और मोह तो अविद्या ही है। इन सभी वृत्तियों का निरोध करना चाहिये। इनका निरोध होने पर सम्प्रज्ञात अथवा असम्प्रज्ञात समाधि सिद्ध होती है॥११॥

### तत्त्ववैशारदी

**अनुभूतविषयासंप्रमोषः स्मृतिः। प्रमाणादिभिरनुभूते विषये योऽसंप्रमोषोऽस्तेयं सा स्मृतिः। संस्कारमात्र[2]जस्य हि ज्ञानस्य संस्कारकारणानुभवावभासितो विषय आत्मीयः, तदधिकविषयपरिग्रहस्तु संप्रमोषः स्तेयम्।[3] कस्मात्? सादृश्यात्, मुष स्तेये इत्यस्मात्सं-**

1. क ख ग च छ ज झ त थ द ध न ब भ म य र – **प्रभवन्ति,** घ प फ – **भवन्ति।**
2. क ख घ च छ ज झ त न – **जस्य,** ग थ द ध – **जन्यस्य।**
3. क ख ग छ ज झ त थ द ध – **स्तेयः,** घ च न – **स्तेयम्।**

**प्रमोषपदव्युत्पत्तेः। एतदुक्तं भवति–सर्वे प्रमाणादयोऽनधिगतमर्थं सामान्यतः प्रकारतो वाऽधिगमयन्ति। स्मृतिः पुनर्न पूर्वानुभवमर्यादामतिक्रामति। तद्विषया तदूनविषया वा, न तु तदधिकविषया। सोऽयं वृत्त्यन्तराद्विशेषः स्मृतेरिति।**

सूत्र है–'**अनुभूतेति**।' प्रमाणादि वृत्तियों के द्वारा ज्ञात '**विषय**' का जो असम्प्रमोष= अस्तेय= अपृथक्करणत्व है, उसे '**स्मृति**' वृत्ति कहते हैं। अर्थात् अनुभूत विषय-विषयक ज्ञान को '**स्मृति**' कहते हैं। संस्कारमात्र से उत्पन्न होने वाला स्मरणात्मक ज्ञान; संस्कार के कारणभूत अनुभव के द्वारा ज्ञात विषय को अपना विषय बनाता है। (अर्थात् अनुभूत विषय ही '**स्मृति**' की वंशानुगत सम्पत्ति है, जिसमें 'स्मृति' वृत्ति का स्वामित्व है–यही अनुभूतविषयासम्प्रमोषत्व है)। अनुभूत विषय से अधिक (अननुभूत) विषय का '**स्मृति**' द्वारा ग्रहण किया जाय तो यह सम्प्रमोष=स्तेय कहलाता है (अर्थात् वंशानुगत विषय-सम्पत्ति का अतिक्रमण कर यदि स्मृति तदतिरिक्त अननुभूत विषयग्रहण का प्रयास करती है, तो यह उसका चौर्य कर्म कहलाता है, क्योंकि अननुभूत विषय में '**स्मृति**' का अधिकारत्व=स्वामित्व नहीं है)।

**शङ्का**–स्मृतिवृत्ति द्वारा अननुभूत विषय-ग्रहण को 'सम्प्रमोष'' अर्थात् स्तेय क्यों कहते हैं?

**समाधान**–चौर्य की सदृशता के कारण '**सम्प्रमोष**' को स्तेय कहते हैं, क्योंकि '**मुष स्तेये**' धातु से '**सम्प्रमोष**' पद निष्पन्न होता है। (सम्+प्र+मुष्+घञ् पूर्वक '**सम्प्रमोष**' शब्द बनता है)। अभिप्राय यह है–स्मृतिभिन्न सभी प्रमाणादि वृत्तियाँ अनधिगत=अज्ञात पदार्थ को सामान्यरूप से अथवा विशेषरूप से जानती हैं। (उदाहरणार्थ प्रत्यक्षवृत्ति पदार्थ के विशेष रूप को जानती है और अनुमानवृत्ति पदार्थ के सामान्य रूप को ग्रहण करती है)। किन्तु स्मृति वृत्ति (अपने पूर्ववर्ती अनुभव के द्वारा) अनुभूत विषय की सीमा का अतिक्रमण नहीं करती है। (शंका है कि स्मृतिपथ में क्या सकल रूप से अनुभूत विषय उपस्थित होता है अथवा कुछ न्यून रूप से? इसमें क्या नियम है?–इसी सन्देह को ध्यान में रखते हुए तत्त्ववैशारदीकार द्वारा स्पष्टीकरण किया जा रहा है–यह स्मृतिवृत्ति '**सम्पूर्ण**' अनुभूतविषयावगाहिनी हो सकती है अथवा '**किञ्चिद्**' अनुभूतविषयावलम्बिनी, किन्तु अनुभूतविषयाधिक-विषयिणी (अननुभूतविषयिणी) नहीं हो सकती है। यही स्मृतिवृत्ति का प्रमाणादि वृत्तियों से अन्तर है।

**बालप्रिया–**

'**तदूनविषया वा**'='**पूर्वानुभूतादूनविषया वा**'। सूत्रगत '**असम्प्रमोष**' शब्द से '**स्मृति**' में अनुभूत विषय से अधिक विषय का परिग्रहाभाव ही बतलाया गया है न कि

**'ऊनविषयग्रहाभाव'**। फलतः **'प्रमुष्टतत्ताकस्मृतिः'**–इत्याकारक स्मृति का लक्षण भी संगृहीत हो जाता है। **'तदूनविषया'** का उदाहरण समूहालम्बनात्मक स्मरणज्ञान है, क्योंकि समूहालम्बनज्ञानजन्य संस्कार द्वारा आंशिक रूप से स्मरणोद्बोध होता है।

**'न तु तदधिकविषया'**–स्मरणज्ञान में जहाँ अननुभूत विषय की दृष्टि से अधिकविषयत्व की प्रतीति होती है, वहाँ भी विभिन्नकालीन अनुभवजन्य संस्कारों का एक साथ उद्बोध समझना चाहिये। किन्तु स्मरणज्ञान कभी भी अनुभूतविषय की परिधि का उल्लंघन नहीं करता है।

सम्प्रति, स्मृति के 'विषय' का अनुभव के विषय से आन्तरिक अन्तर को स्फुट करने के लिये अग्रिम विचार प्रस्तुत हो रहा है–

## तत्त्ववैशारदी

**विमृशति–किं प्रत्ययस्येति। ग्राह्यप्रवणत्वादनुभवस्य स्वानुभवाभावात्तज्जः स[1] संस्कारो ग्राह्यमेव स्मारयतीति प्रतिभाति।[2] मे अनुभवमात्रजनितत्वाच्चानुभवमेव वेति। विमृश्योपपत्तित उभयस्मरणमे[3]वावधारयति–ग्राह्योपरक्त इति। ग्राह्यप्रवणतया ग्राह्योपरक्तः। परमार्थतस्तु ग्राह्यग्रहणे एवोभयं तयोराकारं स्वरूपं निर्भासयति प्रकाशयति। [4]स्वव्यञ्जनकारणमञ्जनमाकारो यस्य स तथोक्तः। स्वकारणाकार इत्यर्थः। [5]स्वकारणाकारव्यञ्जकमुद्बोधकम्, तेनाञ्जनं फलाभिमुखीकरणं यस्येति वेत्यर्थः।**

भाष्यकार (परीक्षणार्थ) विषय को उठाते हैं–**किं प्रत्ययस्येति।**'

**शङ्का**–(प्रश्न है कि स्मरणज्ञान के विषय का स्वरूप क्या है)-अनुभव ग्राह्यप्रवण होता है अर्थात् ज्ञान सविषयक होता है, किन्तु विषयानुभव के पश्चात् (तृतीय क्षण में) अनुभव (ज्ञान) नष्ट हो जाता है। इसलिये अनुभवजन्य संस्कार क्या **'ग्राह्य'** विषय का ही स्मरण अर्थात् प्रतिभान कराता है?– यह प्रथम विकल्प है। अथवा अनुभवमात्र से उत्पन्न होने के कारण संस्कार **'अनुभव'** अर्थात् प्रत्ययज्ञान का ही स्मरण कराता है?–यह द्वितीय विकल्प है।

---

1. थ द ध – **सः** उपलभ्यते, क ख ग घ च छ ज झ त न – **सः** नोपलभ्यते।
2. त द ध ट ठ ड ढ च छ ज ध न – **प्रतिभाति** उपलभ्यते, ख – **प्रतिभाति** नोपलभ्यते।
3. थ द ध – **एव** उपलभ्यते, क ख ग घ च छ ज झ त न – **एव** नोपलभ्यते।
4. क ख ग घ च छ ज झ त द ध – **स्वव्यञ्जकं कारणमञ्जनम्**, थ – **स्वव्यञ्जकं कारणम्**, न – **स्वव्यञ्जनकारणमञ्जनम्**।
5. क ख ग घ च छ ज झ त न – **स्वकारणाकारव्यञ्जकमुद्बोधकं तेनाञ्जनम्**, थ द ध – **यद्वा व्यञ्जकमुद्बोधकं=अञ्जनम्**।

**समाधान**—पूर्वपक्षी की उक्त शंका पर विचार करके औचित्य (युक्ति) के आधार पर भाष्यकार '**ग्राह्यग्रहणोभयात्मक**' स्मरण (अनुभवजन्यसंस्कार ग्राह्यग्रहणोभयविषयक होता है) के सिद्धान्त को दृढ़तापूर्वक बतलाते हैं—'**ग्राह्योपरक्त इति।**' ग्राह्याभिमुख होने से प्रत्यय (ज्ञान) ग्राह्योपरक्त ही होता है। किन्तु पारमार्थिक दृष्टि से अनुभव (प्रत्यय) ग्राह्यग्रहणोभयात्मक है। अतः ग्राह्य तथा ग्रहण दोनों के आकार अर्थात् स्वरूप का प्रकाशन (निर्भास) करता है। अपने अभिव्यञ्जकीभूत कारणरूप अनुभव से उत्पन्न संस्कार भी अपने कारणाकार अर्थात् ग्राह्यग्रहणोभयाकारात्मक होता है और वह भी कारणाकार (ग्राह्यग्रहणोभयाकाररूप ज्ञान) का उद्बोधक होता है। फलतः संस्कार अपने समान आकार वाली अर्थात् विषय और ज्ञान उभय विषय वाली, स्मृति को उत्पन्न करता है। इससे संस्कार में फलाभिमुखकरणत्व है।

**बालप्रिया**—

'**किं प्रत्ययस्य चित्तं स्मरति**'—स्मरणार्थक 'स्मृ' धातु से '**स्मरति**' यह क्रिया पद निष्पन्न होता है। अतः स्मरणार्थक '**स्मृ**' धातु के योग से '**प्रत्ययस्य**' में 'कर्म' के अर्थ में षष्ठी विभक्ति का प्रयोग हुआ है। तदर्थ सूत्र है—'**अधीगर्थदयेशां कर्मणि**'। अतः उक्त वाक्य का अर्थ है—'**चित्तं किं ज्ञानं स्मरति, किं विषयं स्मरति**'—अर्थात् चित्त क्या 'ज्ञान' का स्मरण करता है अथवा '**विषय**' का स्मरण करता है? यहाँ इतना और समझना चाहिये कि उक्त दो विकल्पों से तृतीय विकल्प का भी अध्याहार हो जाता है। तृतीय विकल्प है—'**किमुभयं स्मरति।**' इस तृतीय विकल्प के अध्याहार का कारण यह है कि सिद्धान्ततः स्मृति को '**ग्राह्यग्रहणोभयविषयक**' प्रतिपादित किया जायेगा।

'**ग्राह्योपरक्तः**'—भावार्थ यह है—यद्यपि ज्ञानानुभव के अभाव से (ज्ञान के त्रिक्षणावस्थायी होने से) '**अयं घटः**' में '**प्रत्यय**' ग्राह्योपरक्त होकर ही प्रतीत होता है तथापि '**घटमहं जानामि**' इत्याकारक अनुव्यवसाय ज्ञान में '**ग्राह्य**' और '**ग्रहण**' दोनों की ही प्रतीति होती है। इससे '**प्रत्यय**' अर्थात् अनुभव '**ग्राह्यग्रहणोभयाकार**' का ही निर्भासक होता है। और वह अनुभव स्वजातीय अर्थात् ग्राह्यग्रहणोभयाकार वाले ही संस्कार को उत्पन्न करता है और यह उभयविषयक (ग्राह्यग्रहणोभयविषयक) संस्कार उद्बोधक सामग्री से फलाभिमुख होता हुआ स्वसमानाकार वाली ही ग्राह्यग्रहणोभयविषयिणी '**स्मृति**' को उत्पन्न करता है। इस प्रकार अनुभव, अनुभव-जन्य संस्कार और संस्कारजन्य स्मृति में समानाकारता होने के कारण ही इनमें कार्यकारणभाव की कल्पना की गई है।

अनुभव, संस्कार और स्मरण की समानाकारता के विषय में प्रतिपादित उक्त न्याय, पूर्वपक्षी के अन्तःकरण में एक नवीन जिज्ञासा को जन्म देता है। अतः

पूर्वपक्षी की ओर से नूतन शङ्का के उपस्थापनपूर्वक उसका समाधान पक्ष प्रस्तुत किया जा रहा है–

**तत्त्ववैशारदी**

**ननु यदि कारणविचारणे बुद्धिस्मरणयोः सारूप्यम्, कस्तर्हि भेद[1] इत्यत आह–तत्र ग्रहणेति। ग्रहणमुपादानम्। न च गृहीतस्यो[2]पात्तस्योपादानं संभवति। तदनेनानधिगतबोधनं बुद्धिरित्युक्तम्। ग्रहणाकारो ग्रहणरूपं पूर्वं प्रधानं यस्याः सा तथोक्ता। विकल्पितश्चायमभेदेऽपि बुद्धिग्रहणयोः[3] गुणप्रधानभाव इति। ग्राह्याकारः पूर्वः प्रथमो यस्याः सा तथोक्ता। इदमेव च ग्राह्याकारस्य ग्राह्यस्य पूर्वत्वं यद्वृत्त्यन्तरविषयीकृतत्वमर्थस्य। तदनेन वृत्त्यन्तरविषयीकृत-गोचरा स्मृतिरित्युक्तं भवति। सोऽयमसंप्रमोष इति।**

**शङ्का**–कारणवाद पर विचार करने पर बुद्धि (अनुभव) और स्मरण (स्मृति)–इन दोनों प्रकार के ज्ञानों में यदि समानता (सरूपता, समानविषयाकारता) है, तो फिर इन दो प्रकार के ज्ञानों में अन्तर क्या है? अर्थात् अनुभव और स्मरण दोनों के एकरूप होने से उनमें भेदविवक्षा करना व्यर्थ है।

**समाधान**–इस पर भाष्यकार कहते हैं–'**तत्र ग्रहणेति**'। यहाँ (भाष्यस्थ) '**ग्रहण**' शब्द का अर्थ '**उपादान**' अर्थात् प्राप्त करना (अधिग्रहण करना) है और गृहीत अर्थात् उपात्त वस्तु का पुनः उपादान संभव नहीं है अर्थात् प्राप्त वस्तु के लिये पुनः प्राप्ति की बात नहीं रहती है। इसलिये अनधिगत तत्त्व के ज्ञान को '**बुद्धि**' (अनुभव) कहते हैं। यह '**ग्रहणाकार**' अर्थात् ग्रहणरूप, जिसमें '**पूर्व**' अर्थात् प्रधान रहता है, उस प्रकार की 'बुद्धि', '**ग्रहणाकारपूर्वा**' कहलाती है। (जिज्ञासा है कि बुद्धि और ग्रहण में कथित गौणप्रधानभाव की स्थिति वास्तविक है अथवा काल्पनिक? उसी का उत्तर देते हुए तत्त्ववैशारदीकार कहते हैं)–'**बुद्धि**' और '**ग्रहण**' में अभेद होने पर भी गौण-प्रधान-भाव से कथित भेद को '**राहोः शिरः**' के समान कल्पित समझना चाहिये। अर्थात् विकल्पवृत्ति पर आधारित समझना चाहिये अर्थात् '**बुद्धि**' और '**ग्रहण**' में कल्पित भेद को '**विकल्पवृत्ति**' का दृष्टान्त समझना चाहिये।

(बुद्धि=अनुभव के लक्षण '**ग्रहणाकारपूर्वा बुद्धिः**' की व्याख्या हो जाने के पश्चात् स्मृति के तथाकथित लक्षण '**ग्राह्याकारपूर्वा स्मृतिः**' को स्पष्ट किया जा रहा है)–जिसका '**ग्राह्याकार**' अर्थात् ग्राह्यरूप 'पूर्व' अर्थात् प्रथम अर्थात् प्रधान रहता है, उस प्रकार की '**स्मृति**' कही जाती है। और ग्राह्याकार के ग्राह्यत्व का '**पूर्वत्व**' अर्थात्

1. क ख ग घ च छ ज झ त न – **भेदः** थ द ध – **विशेषः**।
2. क ख ग घ च छ ज झ त न – **उपात्तस्य** उपलभ्यते, थ द ध – **उपात्तस्य** नोपलभ्यते।
3. थ द ध – **बुद्धिग्रहणयोः** उपलभ्यते, क ख ग घ च छ ज झ त न – **बुद्धिग्रहणयोः** नोपलभ्यते।

प्रधानत्व यही है कि **'ग्राह्य'** पदार्थ प्रमाणादि वृत्त्यन्तरों का विषय हो चुका रहता है। अतः वृत्त्यन्तर से विषयीकृत (अनुभूत) पदार्थ को विषय करने वाली वृत्ति **'स्मृति'** कहलाती है। और यही स्मृतिवृत्ति का (सूत्रकार द्वारा कथित) **'असम्प्रमोषत्व'** है। (इस प्रकार कार्यकारण के सिद्धान्त पर स्थापित 'समानविषयाकार' अनुभव और स्मरण का भेद स्पष्ट हो जाता है)।

स्मृति में **'असंप्रमोष'** की मान्यता को सुनकर पूर्वपक्षी स्मृति में **'संप्रमोष'** की स्थिति को समाविष्ट करने के लिये शंका करता है–

**तत्त्ववैशारदी**

**नन्वस्ति–स्मृतेरपि संप्रमोषः। दर्शयति हि पित्रादेरतीतस्य देशकालान्तरानुभूतस्याननु-भूतचरदेशकालान्तर[1]संबन्धं स्वप्न इत्यत आह–सा च द्वयीति। भावितः कल्पितः स्मर्तव्यो यया सा तथोक्ता। अभावितोऽकल्पितः पारमार्थिक इति यावत्। नेयं स्मृतिः, अपि तु विपर्ययः, तल्लक्षणोपपन्नत्वात्। स्मृत्याभासतया तु स्मृतिरुक्ता प्रमाणाभासमिव प्रमाणमिति भावः।**

**शङ्का**–(**'स्मृति'** केवल अनुभूतविषयक ही नहीं होती है, अपितु अपने जनक अनुभव के विषय से अधिक (अननुभूत) विषय को ग्रहण करने वाली होने से) स्मृति में **'सम्प्रमोषत्व'** (चौर्य) भी है। जैसे स्मृतिवृत्ति देशकालान्तर में अनुभूत मृत पिता आदि का स्वप्न में अननुभूत देशकालान्तर के साथ सम्बन्ध स्थापित कराती है।

**समाधान**–इस पर (शंका को सिद्धान्त में प्रकारान्तर से समाविष्ट करते हुए) भाष्यकार कहते हैं–**सा च द्वयीति।** जिससे **'भावित'**=कल्पित अर्थात् मिथ्या पदार्थ का स्मरण होता है, उसे **'भावितस्मर्तव्या'** स्मृति कहते हैं और जिससे **'अभावित'**= अकल्पित अर्थात् वास्तविक पदार्थ का स्मरण होता है, उसे **'अभावितस्मर्तव्या'** स्मृति कहते हैं।

**शङ्का**–(स्मृति में **'असंप्रमोषत्व'** के निर्वाह के लिये–पूर्वपक्षी द्वारा स्मृति में उत्थित **'संप्रमोषत्व'** की उक्त आशंका को–सिद्धान्ती ने स्मृति को **'भावितस्मर्तव्या'** भेद में अन्तर्हित करने का जो प्रयास किया है, उससे दूसरी आशंका जन्म धारण करती है। आशंका का स्वरूप इस प्रकार है)–उपरिवर्णित यह **'भावितस्मर्तव्या'** स्मृति ज्ञानरूप नहीं अपितु विपर्ययज्ञान रूप है, क्योंकि इसमें विपर्ययज्ञान (विपर्ययवृत्ति) का **'मिथ्यात्व'** रूप लक्षण घटित हो रहा है। अर्थात् भावितस्मर्तव्य ज्ञान विपर्ययरूप है, न कि स्मरणरूप।

**समाधान**–ऐसी बात नहीं है। वस्तुस्थिति यह है जिस प्रकार रज्ज्वादि में मिथ्याभूत सर्पादि पदार्थ का अनुभव, अनुभवरूप नहीं अपितु अनुभवाभास है। अर्थात्

---

1. क च छ – **सम्बन्धः**, ख ग घ ज झ त थ द ध न – **सम्बन्धम्।**

विपर्यय प्रमाण नहीं अपितु प्रमाणाभास है। उसी प्रकार स्वप्न में होने वाली **'भावितस्मर्तव्या'** रूप जो स्मृति है, वह स्मृति नहीं अपितु स्मृत्याभास है। अर्थात् संस्कारजन्य होने से वह स्मृति सदृश प्रतीत होती है। अतः वह विपर्ययरूप नही है।

**बालप्रिया–**

स्वाप्निक वृत्ति को लेकर विचार प्रस्तुत हो रहा है–

**शङ्का**–जिस प्रकार जाग्रत् अवस्था में प्रमाणादि सभी वृत्तियाँ होती हैं, उसी प्रकार क्या स्वप्न में स्मृत्यतिरिक्त प्रमाणादि सभी वृत्तियाँ भी होती हैं अथवा नहीं?

**पूर्वपक्ष–'नेयं स्मृतिरपितु विपर्ययः'**–स्वप्न में स्मृतिवृत्ति को ही स्वीकार किया जाय तो स्वप्न में **'अयमश्वः धावति'** इत्यादि अनुभवात्मक ज्ञान का उदय नहीं होगा और न ही स्वप्न से उत्थित व्यक्ति को **'राजनमद्राक्षम्'** इत्यादि स्मरणात्मक ज्ञान हो सकेगा। क्योंकि स्मृति वर्तमानकालिक तथा अननुभूत पदार्थविषयक नहीं, अपितु भूतकालिक अनुभूत पदार्थविषयक ही होती है। स्वप्नस्मृतिवाद के अनुसार **'सोऽश्वः'**, **'राजानमस्मार्षम्'** इत्याकारक ज्ञान (प्रतिपत्ति) ही सम्भव है। इसलिये स्वप्न में अपूर्व प्रातिभासिक पदार्थों (भावों) की सृष्टि होती है ऐसा कहना युक्तियुक्त है। अतः बृहदारण्यकोपनिषद् में कहा गया है कि जाग्रत् अवस्था में आदित्यादि प्रकाश तथा वागादि ज्योति विद्यमान रहती है। इसलिये जाग्रत् अवस्था में प्रकाशादि के कारण **'दर्शन' 'आसन'** आदि व्यवहार संभव हैं। फलतः जाग्रत् अवस्था में आत्मचैतन्य के कारण उक्त व्यवहार को सिद्ध करना सम्भव नहीं है। किन्तु स्वप्न में सूर्यादि ज्योति का अभाव रहने पर भी ज्ञानादि (ज्ञानेन्द्रियों की अनुभवादि क्रिया और कर्मेन्द्रियों की आसनादि शारीरिक क्रिया) का व्यवहार देखा जाता है। स्वप्नकालिक यह व्यवहार प्रकाशादि के कारण तो माना नहीं जा सकता है, क्योंकि तब प्रकाशादि का अभाव रहता है। अतः इस (व्यवहार) को आत्मचैतन्यनिमित्तक ही स्वीकार किया जाता है। इसी अभिप्राय से आत्मा का स्वयंज्योतिष्ट्व (ज्योतिस्वरूपता) बतलाने के लिये अनेक श्रुतियाँ प्रवृत्त हुई हैं। उदाहरणस्वरूप निम्नाङ्कित श्रुति को लिया जा सकता है–**'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते'** अर्थात् 'स्वप्न में न रथ है, न रथयोग (सारथि) है और न ही मार्ग है, फिर भी रथ, रथयोग तथा मार्ग की सृष्टि होती है।' इस प्रकार श्रुतियाँ भी **'अपूर्व'** के द्वारा प्रातिभासिक रथादि सृष्टि का प्रतिपादन करती हैं। इस पद्धति से **'भावितस्मर्तव्या'** स्मृति का मूल्यांकन करने पर पूर्वपक्षी के अनुसार यह **'स्मृति'** रूप नहीं, अपितु **'विपर्यय'** रूप है। अतः **'भावितस्मर्तव्या'** का स्मृतित्वविधान अनुपपन्न है।

**उत्तरपक्ष–'स्मृत्याभासतया तु स्मृतिरुक्ता'**–पूर्वपक्षी के अनुसार **'भावितस्मर्तव्या'** को 'विपयर्य' रूप तो कथमपि नहीं कह सकते हैं, अपितु स्मृत्याभास होने से इसे स्मृति

ही कहा जाता है। क्योंकि इस (भावितस्मर्तव्या) में विषय सन्निकृष्ट नहीं रहता है, यह प्रमाणजन्य ज्ञान नहीं है और यह संस्कारजन्य होती है–इन तीन कारणों से **'भावितस्मर्तव्या'** के लिये **'स्मृत्याभास'** कथन युक्तियुक्त है। क्योंकि यह स्मृति की तरह अवभासित होती है। शारीरकभाष्य में भी **'स्मृतिरेषा यत्स्वप्नदर्शनम्'** २/२/२९ स्वप्न ज्ञान को स्मृतिरूप ही बतलाया गया है। निष्कर्षतः स्वप्न में प्रमाणादि वृत्तियाँ तो नहीं होती हैं तथा **'भावितस्मर्तव्या'** के आधार पर पूर्वपक्षी ने स्वप्न में 'विपर्यय' वृत्ति के होने का जो सन्देह किया था वह भी निरस्त हो जाता है। किञ्च स्वप्न में **'भावितस्मर्तव्या'** नामक स्मृत्याभास का होना भी सिद्ध हो जाता है।

सम्प्रति, **प्रमाणविपर्ययविकल्पनिद्रास्मृतयः** १/६ सूत्र में स्मृति को पञ्चम तथा अन्तिम स्थान पर रखने की युक्तियुक्तता पर विचार प्रस्तुत है–

### तत्त्ववैशारदी

**कस्मात्पुनरन्ते स्मृतेरुपन्यास इत्यत** आह–**सर्वाश्[1]चैताः स्मृतय** इति। **अनुभवः** प्राप्तिः। **प्राप्तिपूर्वा वृत्तिः स्मृतिस्ततः स्मृतीनामुपजन इत्यर्थः।**

**शङ्का**–प्रमाणादि पांच वृत्तियों में **'स्मृति'** वृत्ति का सबसे अन्त में उल्लेख क्यों किया गया है?

**समाधान**–समाधानार्थ भाष्यकार कहते हैं–**'सर्वाश्चैताः स्मृतय इति।' 'अनुभव'** शब्द का अर्थ **'प्राप्ति'** है और प्राप्तिपूर्विका वृत्ति **'स्मृति'** है। अतः स्मृतियों का उपजन अर्थात् उद्गम स्थल अनुभव है। (अर्थात् स्मृति अनुभवजन्य है। अतः सभी प्रकार के अनुभवों से स्मृति का उदय होता है। अतः उपसर्जन अर्थात् गौणरूप होने से भी स्मृतिवृत्ति का सबसे अन्त में उपस्थापन किया गया है। इतना और जान लेना आवश्यक है कि अनुभवजन्य स्मृति, स्मृत्यन्तर का कारण है। ऐसी स्थिति में 'पूर्व' स्मृति अनुभव रूप से **'पर'** स्मृति की जनक होती है। निष्कर्षतः समस्त स्मृतियाँ; प्रमाण, विपर्यय, विकल्प, निद्रा तथा स्मृतिरूप अनुभवों से उत्पन्न होती हैं)।

प्रमाणादि पांच वृत्तियों के प्रतिपादन की उपसंहृति के अवसर पर एक बार पुनः **'योगश्चित्तवृत्तिनिरोधः'** सूत्र द्वारा प्रतिपादित वृत्तिनिरोध से प्रमाणादि की अन्तःसंगति बैठाने के लिय विचार प्रस्तुत हो रहा है–

### तत्त्ववैशारदी

**ननु ये पुरुषं [2]क्लिश्यन्ति ते निरोद्धव्याः प्रेक्षावता। क्लेशाश्च तथा, न च वृत्तयः। तत्किमर्थमासां निरोध इत्यत** आह–**सर्वाश्चैता** इति। **सुगमम्॥११॥**

---

1. घ च छ ज झ त न – **चैताः** उपलभ्यते, क ख ग थ द ध – **चैताः** नोपलभ्यते।
2. क च ज – **क्लिश्नन्ति**, ख ग घ छ झ त थ द ध न – **क्लिश्यन्ति**।

**शङ्का**–जो पुरुष को क्लेश प्रदान करते हैं, वे ही बुद्धिमानों के द्वारा निरोद्धव्य (निरोध योग्य) होते हैं। इस प्रकार का क्लेशदायकत्व अविद्यादि में निहित है, प्रमाणादि वृत्तियों में नहीं। अतः प्रमाणादि वृत्तियों के निरोध का प्रयोजन क्या है?
**समाधान**–(प्रमाणादि वृत्तियों के निरोध के प्रयोजन को बतलाते हुए) भाष्यकार कहते हैं–'**सर्वाश्चैता इति**।' (तत्त्ववैशारदीकार के अनुसार) एतत्सन्दर्भीय भाष्य सुगम है। (भाष्य का तात्पर्य यह है कि त्रिगुणात्मिका बुद्धि की विस्तरविलासरूपा प्रमाणादि वृत्तियों का '**क्लेशत्व**' उनका प्राणसर्वस्व है और क्लेशमूलक वृत्तिनिरोध के पीठ पर ही चित्त में सम्प्रज्ञात और असम्प्रज्ञात योग की प्राणप्रतिष्ठा होती है)॥११॥

### योगवार्त्तिकम्

**अनुभूतविषयासंप्रमोषः स्मृतिः। भाष्यानुसारेणास्य सूत्रस्यायमर्थः–[1]पूर्वमनुभूतौ यौ विषयौ वृत्तितदारूढार्थौ तयोरसंप्रमोषोऽस्तेयमनपहरणं धर्मधर्म्यभेदात्तद्वती तदुभयविषयिणीति यावत्, एवंभूता वृत्तिः स्मृतिरिति।**

'**अनुभूतेति**।' व्यासभाष्य के अनुसार प्रस्तूयमान सूत्र का अर्थ यह है–'**अनुभूत विषय**' अर्थात् अनुभूत '**वृत्ति**' और अनुभूत वृत्त्यारूढ '**विषय**'–इन दोनों का जिसमें '**असंप्रमोष**' अर्थात् अपहरण नहीं होता है, उस वृत्ति को '**स्मृति**' कहते हैं। धर्म और धर्मी का अभेद होने से यह स्मृतिवृत्ति उभयविषयिणी होती है।
**बालप्रिया**–

'**धर्मधर्म्यभेदात्**'–भाव यह है कि धर्मीभूत चित्त का धर्म वृत्ति है। अतः चित्त और उसकी वृत्ति में धर्मधर्मिभावसम्बन्ध है। धर्मधर्मिभावसम्बन्ध सापेक्ष होता है। चित्त की वृत्ति को तद्विषय की दृष्टि से '**धर्मी**' तथा 'विषय' को 'वृत्ति' की दृष्टि से '**धर्म**' कहा जाता है। प्रकृत में वृत्तिरूप विषय की धर्मरूप धर्मिता कही गई है।

सम्प्रति, योगवार्त्तिककार '**स्मृति**' लक्षण पर विचार करते हुए आगे कहते हैं–

### योगवार्त्तिकम्

**अत्र प्रत्यभिज्ञाऽऽदिव्यावृत्तये संस्कारमात्रजन्यत्वमेव स्मृतिलक्षणम्, सूत्रकारेण तु स्मृतेः प्रायिकं स्वरूपमेवोक्तम्, तेन न प्रमुष्टतत्ताकस्मरणाव्याप्तिः।**

'**प्रत्यभिज्ञा**' आदि ज्ञानों से '**स्मृति**' ज्ञान को व्यावृत्त (पृथक्) करने के लिये '**संस्कारमात्रजन्यत्व**' को ही '**स्मृति**' का लक्षण कहना चाहिये। अर्थात् '**संस्कारमात्रजन्यत्वं स्मृतित्वम्**' यह स्मृति का लक्षण है। सूत्रकार ने तो प्रकृत सूत्र के द्वारा स्मृति के स्वरूप को ही प्रायेण बतलाया है। अतः सूत्रकारकृत स्मृतिलक्षण की प्रमुष्टतत्ताक

---

1. क ख घ च छ – **पूर्वम्**, ग – **एवम्**।

स्मरण में अव्याप्ति नहीं समझनी चाहिये। (योगवार्त्तिककार की ओर से सूत्र की यह एक प्रकार की व्याख्या है)।

**बालप्रिया–**

**'संस्कारमात्रजन्यत्वम्'**–यह स्मृतिलक्षण **'प्रत्यभिज्ञा'** में इसलिये अतिव्याप्त नहीं होता है कि **'प्रत्यभिज्ञा'** तो संस्कारसचिव-इन्द्रियजन्या है, केवल संस्कारजन्या नहीं।

**'स्मृति'** लक्षण की द्वितीय प्रकार से व्याख्या करते हुए योगवार्त्तिककार कहते हैं–

**योगवार्त्तिकम्**

**अथवा सूत्रोक्तमेव लक्षणम्, तच्च संस्कारमात्रजन्यत्वेन विशेषणीयम्। प्रमुष्टतत्ताकं तु संस्कारमात्रजन्यमपि ज्ञानमनुभवमध्ये प्रवेशनीयम्, शब्दजन्यपदार्थोपस्थित्यादौ स्मरामीति स्फुटं व्यवहारादर्शनात्।**

अथवा (प्रकृत सूत्र को **'स्मृति'** का स्वरूपप्रतिपादक न मान कर लक्षणपरक ही मान लिया जाय अर्थात्) सूत्रोक्त ही स्मरण का लक्षण रहे। किन्तु सूत्रोक्त स्मृतिलक्षण में **'संस्कारमात्रजन्यत्व'** इस अंश को विशेषण रूप से सन्निविष्ट करना चाहिये। और संस्कारमात्रजन्य होते हुए भी **'प्रमुष्टतत्ताक'** ज्ञान को अनुभव के अन्तर्गत मानना चाहिये, क्योंकि जहाँ शब्दजन्य पदार्थ की उपस्थिति होती है, वहाँ **'स्मरामि'** इत्याकारक स्फुट (स्पष्ट) व्यवहार नहीं देखा जाता है।

**बालप्रिया–**

**प्रमुष्टतत्ताकं ज्ञानम्–मिश्र-भिक्षु-मतभेद**–वाचस्पति मिश्र **'प्रमुष्टतत्ताक'** ज्ञान को स्मृत्यन्तर्गत मानते हैं, जब कि विज्ञानभिक्षु **'प्रमुष्टतत्ताक'** ज्ञान का अनुभव में प्रवेश करते हैं। स्मृति के विषय का स्वरूप बतलाते हुए वाचस्पति मिश्र ने **'तदूनविषया वा न तु तदधिकविषया'** इस शब्दावली का प्रयोग किया है। मिश्र को स्मृति में अननुभूत (अनुभव का विषय न बने हुए) अधिक विषय का ही परिग्रहाभाव मान्य है, न कि ऊनविषयग्रहाभाव। इससे मिश्र ने **'प्रमुष्टतत्ताक ज्ञान'** को स्मृत्यन्तर्गत रखा है। विज्ञानभिक्षु ने **प्रमुष्टतत्ताकं तु संस्कारमात्रजन्यमपि ज्ञानमनुभवमध्ये प्रवेशनीयम्**–इस शब्दावली द्वारा स्पष्टतः **'प्रमुष्टतत्ताकं** ज्ञान को अनुभव के अन्तर्गत रखा है और इसमें हेतु यह दिया है कि शब्दजन्य पदार्थोपस्थिति में **'स्मरामि'** ऐसा व्यवहार नहीं होता है।

सम्प्रति, योगवार्त्तिककार छठे और ग्यारहवें सूत्र में प्रतिपादित स्मृतिविषयक अन्तर को बतलाते हुए कहते हैं–

## योगवार्त्तिकम्

**प्रमाणेत्यादिवृत्तिविभागसूत्रे तु संस्कारमात्रजन्यत्वगुणेन तादृशं ज्ञानं स्मृतिशब्दगृहीतमनेन च सूत्रेण मुख्यस्मृतिर्लक्षितेति।** स्मृतेर्वृत्तितदर्थोभयविषयकत्व **सूत्रोक्तमवधारयितुं भाष्यकारो विमृशति—किं प्रत्ययस्येति। स्मृत्यर्थधातुयोगात् कर्मणि षष्ठी। चित्तं किं पूर्वानुभवरूपं प्रत्ययमपि स्मरति, आहोस्विद्विषयमात्रमित्यर्थः। तत्र स्मृतेरुभयविषयकत्वरूपमाद्यं पक्षं सिद्धान्तयितुमादावुभयस्मरणे कारणमुभयगोचरसंस्कारमुपपादयति—ग्राह्योपरक्त इत्यादिना। यतो ग्राह्योपरक्तो ज्ञानविशेषणतया घटादिभिरप्याकारितोऽतो ग्राह्यग्रहणोभयाकारनिर्भासस्तदुभयाकारतया प्रसिद्धो यः प्रत्ययो घटं जानामीत्यनुव्यवसायः स तथाजातीयकं ग्राह्यग्रहणोभयाकारमेव संस्कारं जनयति, समानाकारत्वेनैव लाघवादनुभवसंस्कारस्मृतीनां कार्यकारणभावादित्यर्थः। नन्वत्र व्यवसायरूपवृत्तेः स्वप्रकाशत्वमेव निर्भासान्तविशेषणार्थः कथं नेष्यत इति चेत्? न; कर्मकर्तृविरोधेन वृत्तेः स्वविषयकत्वस्य सूत्रभाष्याभ्यां चतुर्थपादे निराकरिष्यमाणत्वात्। ननु किं व्यवसायस्य संस्कारजनकत्वमेव नास्ति? न[1] नास्ति, किंतु तत्संस्कारजन्यं ज्ञानं स्मृतिर्न भवति, प्रमुष्टतत्ताकस्य पराभिमतस्य स्मरणस्यास्माभिर्व्यवहारानुसारेणानुभवमध्य एव प्रवेशनादिति। नन्वस्तूभयविषयकसंस्कारस्ततः किमित्यत आह—स संस्कार इति। स चोभयविषयकसंस्कारो यदा स्वाभिव्यञ्जकेन कालादिनाऽभिव्यक्तो भवति तदा तदाकारां स्वसमानाकारामेव ग्राह्यग्रहणोभयात्मिकां तदुभयविषयिणीं स्मृतिं जनयतीत्यर्थः।**

प्रमाणादि (पञ्च) वृत्तियों के भेदप्रतिपादक सूत्र **'प्रमाणविपर्ययविकल्पनिद्रास्मृतयः'** (१/६) में **'संस्कारमात्रजन्यत्व'** साधन (गुण) से उत्पन्न हुए ज्ञान को **'स्मृति'** शब्द से कहा गया है और प्रस्तुत सूत्र के द्वारा **'मुख्य स्मृति'** का लक्षण किया गया है। **'वृत्ति'** अर्थात् ज्ञान और ज्ञानारूढ **'विषय'** दोनों को **'स्मृति'** ग्रहण करने वाली होती है। इस प्रकार स्मृति के सूत्रोक्त उभयविषयकत्व का निश्चय कराने के लिये भाष्यकार विचार कर रहे हैं—**'किं प्रत्ययस्येति।'** योगवार्त्तिककार भाष्य के **'किं प्रत्ययस्य चित्तं स्मरति'** में प्रयुक्त षष्ठ्यन्त **'प्रत्ययस्य'** पद की व्याकरणसम्मत स्थिति को स्पष्ट कर रहे हैं कि यहाँ स्मृत्यर्थक धातु के योग से कर्म में षष्ठी विभक्ति हुई है। (तदर्थ पाणिनि सूत्र है-'अधीगर्थदयेशां कर्मणि' )। वाक्य का अर्थ है—क्या चित्त पूर्वानुभवरूप प्रत्यय का भी स्मरण करता है अथवा विषयमात्र का? इन दो विकल्पों में से स्मृति वृत्ति अनुभूत **'प्रत्यय'** और **'विषय'** दोनों को अपने ज्ञान का विषय बनाती है। स्मृति में उभयविषयकत्व है, इस प्रथम पक्ष को सिद्ध करने के लिये उभयाकार स्मरण के प्रति कारणभूत उभयाकारविषयक संस्कार का उपपादन भाष्यकार करते हैं—

---

1. ग घ च छ — **न नास्ति** उपलभ्यते, क ख — **न नास्ति** नोपलभ्यते।

'**ग्राह्योपरक्त** इत्यादिना।' '**ग्राह्योपरक्त**' अर्थात् ज्ञान के विशेषण के रूप में घटादि ग्राह्य से भी आकारित, ग्राह्य तथा ग्रहण दोनों के आकार से भासित होने वाला अर्थात् उभयाकाररूप से प्रसिद्ध जो '**प्रत्यय**' अर्थात् 'घट को जान रहा हूँ'—इत्याकारक अनुव्यवसायज्ञान होता है, वह (ज्ञान) अपने अनुरूप ही ग्राह्यग्रहणोभयरूप संस्कार को उत्पन्न करता है। फलतः समानाकारत्वरूप से ही लाघव होने के कारण अनुभव, अनुभवजन्य संस्कार और संस्कारजन्य स्मृति में कार्यकारणभावसम्बन्ध है।

**शङ्का**—इस प्रसङ्ग में ('**अयं घटः**'—इत्याकारक) व्यवसायरूप वृत्ति में स्वप्रकाशत्व ही है। अतः व्यवसायरूप वृत्ति में '**ग्राह्यग्रहणोभयाकारनिर्भास**' पर्यन्त विशेषण को क्यों नहीं स्वीकार किया जाता है?

**समाधान**—पूर्वपक्षी का यह कथन युक्तिसंगत नहीं है, क्योंकि कर्मकर्त्तृविरोध से वृत्ति के स्वविषयकत्व का (अर्थात् वृत्तिरूप कर्त्ता स्वयं अपने को विषयरूप कर्म भी बनाती है—इत्याकारक कर्मकर्त्तृविरोध का) चतुर्थ पाद में सूत्रकार तथा भाष्यकार द्वारा निराकरण किया जायेगा।

**शङ्का**—तो क्या व्यवसायज्ञान में संस्कारजनकता ही नहीं है अर्थात् व्यवसायज्ञान से संस्कार उत्पन्न नहीं होता है?

**समाधान**—व्यवसायज्ञान से संस्कारोत्पत्ति नहीं होती है, ऐसा नहीं है। किन्तु व्यवसायज्ञानजन्य संस्कार से उत्पन्न ज्ञान को '**स्मृति**' नहीं कहते हैं, क्योंकि अन्य दार्शनिकों द्वारा मान्यता-प्राप्त '**प्रमुष्टतत्ताक स्मरण**' का हम लोग व्यवहार के आधार पर अनुभव में प्रवेश करते हैं अर्थात् प्रमुष्टतत्ताक ज्ञान स्मरणरूप नहीं, अपितु अनुभवरूप है—ऐसा मानते हैं।

**शङ्का**—भले ही अनुभव से ग्राह्यग्रहणोभयविषयक संस्कार का उत्पन्न होना माना जाय किन्तु इत्याकारक संस्कार से कौन सा प्रयोजन सिद्ध होता है?

**समाधान**—इस पर भाष्यकार कहते हैं—'**स संस्कार** इति।' अनुभवजन्य ग्राह्यग्रहणोभयविषयक संस्कार जब अपने '**अभिव्यञ्जक**' कालादि के द्वारा अभिव्यक्त होता है, तब 'तदाकार' अर्थात् स्वसमानाकार ही '**ग्राह्यग्रहणोभयात्मिका**' अर्थात ग्राह्यग्रहणोभयविषयिणी स्मृति को उत्पन्न करता है।

सम्प्रति, '**अनुभव**' और '**स्मृति**' के अन्तर को प्रतिपादित किया जा रहा है—

## योगवार्त्तिकम्

**अनुभूतविषयासंप्रमोषं सूत्रोक्तं व्याख्यायानुव्यवसायतज्जन्यस्मरणयोर्विशेषमप्याह—तत्र ग्रहण इति। पूर्वं मुख्यं विशेष्यमिति यावत्, तयोः** प्रत्ययस्मरणयोरत्यन्तं समानाकारत्वं न **मन्तव्यं यतस्तत्र तयोर्मध्ये बुद्धिरनुव्यवसायरूपा यथोक्तप्रत्ययो ग्रहणाकारविशेष्यिका भवति घटमहं जानामीत्यनुव्यवसाये ज्ञानस्य घटांशे विशेष्यत्वात्; स्मृतिस्तु ग्राह्याकारविशेष्यिका**

**भवति, स घट इत्येव स्मरणात्; तत्ता च पूर्व[1]ज्ञानत्वरूपा; अतः स्मृतौ ज्ञानस्य ग्राह्यं विशेष्यमिति। अयं चाकारभेदोऽनुभवसिद्ध इति भावः।**

सूत्रवर्णित '**अनुभूतविषयासंप्रमोष**' पद की व्याख्या करके भाष्यकार अनुव्यवसाय-ज्ञान और तज्जन्य स्मरणज्ञान के वैलक्षण्य को भी बताते हैं–'**तत्र ग्रहण इति**।' भाष्य में प्रयुक्त '**पूर्व**' शब्द का अर्थ है–मुख्य अर्थात् विशेष्य। (विशेष्य और विशेषण में विशेष्य मुख्य और विशेषण गौण होता है)। इन दोनों अनुभव और स्मरण में अत्यन्त समानाकारता नहीं समझनी चाहिये, क्योंकि इन दोनों में से 'बुद्धि' अर्थात् अनुव्यवसायरूपा अनुभवात्मिका वृत्ति, ग्रहणाकारविशेष्यरूपा होती है। उदाहरणार्थ '**घटमहं जानामि**' अर्थात् 'मैं घट को जान रहा हूँ' इस अनुव्यवसायज्ञान में, ज्ञान में 'घट' भाग के प्रति विशेष्यत्व है। किन्तु स्मृतिवृत्ति ग्राह्याकारविशेष्यरूपा होती है, क्योंकि '**स घटः**' अर्थात् 'यह घट है'–इत्याकारक ही स्मरणज्ञान होता है, '**तत्ता**' तो पूर्वज्ञानत्वरूप होता है। अतः स्मृति में ज्ञान का विषयभूत '**ग्राह्य**' विशेष्य (मुख्य) होता है और 'ज्ञान' विशेषण गौण होता है। अनुव्यवसाय और स्मरण का इत्याकारक अन्तर अनुभवसिद्ध है।

**बालप्रिया–**

'**घटमहं जानामीत्यनुव्यवसाये ज्ञानस्य घटांशे विशेष्यत्वात्**'–वाक्य का अर्थ है–'**अयं घट इति ज्ञानवानहम्**' अर्थात् 'यह घट है–इस ज्ञानवाला मैं हूँ।' इस वाक्य में ज्ञान '**विशेष्य**' और ग्राह्य घट '**विशेषण**' है।

सम्प्रति, योगवार्त्तिककार स्मृति के भेदों पर विचार करते हैं–

**योगवार्त्तिकम्**

**स्मृतेरवान्तरभेदं दर्शयति–सा च द्वयीति। भावित उद्भावितः सूचितः स्मर्त्तव्यार्थो ययेति भावितस्मर्त्तव्या, तद्भिन्ना चाभावितस्मर्त्तव्या। तयोरुदाहरणे दर्शयति–स्वप्न इति। स्वप्नदर्शनमेव हि भाव्यर्थसूचकतया शास्त्रे सिद्धं न तु जाग्रत्कालीना स्मृतिरिति।**

भाष्यकार स्मृति के अवान्तरभेदों को प्रदर्शित करते हैं–'**सा च द्वयीति**।' (स्मृति दो प्रकार की है-पहली भावितस्मर्तव्या तथा दूसरी अभावितस्मर्तव्या)। जिसके द्वारा स्मर्तव्य पदार्थ '**भावित**' अर्थात् उद्भावित अर्थात् भावी पदार्थ को सूचित करता है, वह '**भावितस्मर्त्तव्या**' स्मृति कहलाती है। और इससे भिन्न स्मृति को '**अभावितस्मर्त्तव्या**' स्मृति कहते हैं। भाष्यकार, दोनों स्मृतियों के उदाहरणों को बतलाते हैं–'**स्वप्न इति**।' (स्वप्न में भावितस्मर्त्तव्या स्मृति और जाग्रदवस्था में अभावितस्मर्त्तव्या स्मृति होती है, इसी तथ्य को ध्यान में रखकर योगवार्त्तिककार कह रहे हैं कि)–शास्त्र में

---

1. क क ग घ – **ज्ञातत्व**0, च छ – **ज्ञानत्व**0, ख – **ज्ञातत्व**0/**ज्ञानत्व**0 नोपलभ्यते।

भाव्यर्थ अर्थात् भावी पदार्थ के सूचक रूप से स्वप्नदर्शन को ही मान्यता प्राप्त है, न कि जाग्रत्कालीन स्मृति को।

सम्प्रति, योगवार्त्तिककार '**भावितस्मर्त्तव्या**' स्मृति के स्मृतित्व को शंकोपस्थापन-पूर्वक सिद्ध करते हैं–

### योगवार्त्तिकम्

**ननु स्वप्ने पूर्वदृष्टत्वास्मरणात् संस्कारमात्रजन्यत्वाभावाच्च कथं स्मृतित्वमिति चेत्? न; अंशतस्तदुभयरूपत्वस्य स्वप्नज्ञानेष्वपि सत्त्वात् तादृशस्य स्वप्नांशस्यैवात्रोपन्यासादिति।**

**शङ्का**–स्वप्न में न तो पूर्वदृष्ट अर्थात् पूर्वानुभूत पदार्थ का स्मरणज्ञान होता है और न ही स्वप्नज्ञान में संस्कारमात्रजन्यता है। अतः स्वप्नज्ञान का स्मृतित्व भला कैसे उपपन्न हो सकता है? अर्थात् स्वप्नज्ञान न तो संस्कारजन्य होता है और न ही अनुभूतविषयक होता है। अतः स्वप्नज्ञान को स्मृति कहना अनुपपन्न है।

**समाधान**–पूर्वपक्षी का वक्तव्य अनुचित है, क्योंकि स्वप्नज्ञान में भी पूर्वदृष्टत्व (अनुभूतविषयत्व) तथा संस्कारमात्रजन्यत्व दोनों आंशिक रूप से विद्यमान रहते हैं। अतः इस प्रकार के स्वप्नांश का ही स्मृति के रूप में भाष्य में उपन्यास हुआ है। अर्थात् भावितस्मर्त्तव्या स्मृति को भाष्य में मान्यता प्राप्त हुई है।

सम्प्रति, वृत्तिप्रकरण में '**स्मृति**' का सबसे अन्त में वर्णन किये जाने पर विचार किया जा रहा है–

### योगवार्त्तिकम्

**सर्ववृत्त्यन्ते स्मृतिवृत्तेरुपन्यासस्य बीजमाह–सर्वा इति। अनुभवात्=अनुव्यवसायात्, अनुभावादिति पाठे प्रभावादित्यर्थः।**

(**शङ्का**–प्रमाणादि समस्त वृत्तियों के अन्त में स्मृतिवृत्ति के उपस्थापन का प्रयोजन क्या है?

**समाधान**–अन्तर्निहित इस शंका के निरसनार्थ) सब वृत्तियों के अन्त में स्मृति वृत्ति के प्रतिपादन के कारण को भाष्यकार बतलाते हैं–'**सर्वा इति**।' प्रमाणादि समस्त (पञ्च) वृत्तियों के 'अनुभव' अर्थात् अनुव्यवसायज्ञान से स्मृतियाँ उत्पन्न होती हैं। अतः सबसे अन्त में स्मृतिवृत्ति के उपपादन का प्रयोजन यही है। योगवार्त्तिककार भाष्य के भिन्न-भिन्न पाठों को ध्यान में रखते हुए कहते हैं कि–'**अनुभवात्**' ऐसा पाठ उपलब्ध होने पर '**अनुव्यवसायात्**' अर्थ करना चाहिये और 'अनुभावात्' इत्याकारक समुपलब्ध पाठ का अर्थ है–**प्रभावात्**, अर्थात् प्रमाणादि पञ्च वृत्तियों के प्रभाव से स्मरणज्ञान का उदय होना। अतः स्मृतिवृत्ति को सब वृत्तियों के अन्त में उपन्यस्त किया गया है।

सम्प्रति, निखिल वृत्तियों के निरोध के कारण पर विचार किया जा रहा है–

### योगवार्त्तिकम्

**यथोक्तानां वृत्तीनां निरोध्यत्वे बीजमाह–सर्वाश्चैता इति। एताः सर्वाः प्रमाणादिवृत्तयो बुद्धिद्रव्यस्य सुवर्णस्येव प्रतिमाऽऽदिवद्विषयाकारा द्रव्यरूपाः परिणामाः सुखदुःखमोहगुणका इत्यर्थः। बुद्धिवृत्तिर्हि रूपादिमती भार्येव सुखादिमती पुरुषस्य भोग्येति। अतो दुःखवत्त्वेन वृत्तयो निरोद्धव्या इत्यु[1]पसंहरिष्यति। ननु सुखवत्त्वेनोपादेयत्वमेव कुतो[2] न भवेदित्यत आह–सुखदुःखेति। क्लेशेषु क्लेशव्याख्यानसूत्रेषु व्याख्येयाः। व्याख्यानमेवाह–सुखानुशयी राग इत्यादि। सुखदुःखानुशयी सुखदुःखविषयकः। तथा च रागजनकतया दुःखवत्सुखमपि हेयम्, मोहस्त्वविद्यारूपतया शोकाद्यखिलदुःखनिदानत्वेन हेय इत्याशयः। एता इति। अतो दुःखात्मकत्वादेताः सर्वा निरोद्धव्या इत्यर्थः। प्रकरणार्थमुपसंहरति–आसामिति॥११॥**

(**शङ्का**–वृत्तियों के निरोध का प्रयोजन क्या है?

**समाधान**–अन्तर्निहित इस शंका के निरसनार्थ) भाष्यकार प्रमाणादि वृत्तियों के निरोध का कारण बतलाते हैं–'**सर्वाश्चैता इति**।' सुवर्ण के मूर्त्ति आदि परिणाम की भाँति पूर्वकथित ये सभी प्रमाणादि वृत्तियाँ बुद्धिरूप द्रव्य की सुख-दुःख-मोहात्मक विषय वाली द्रव्यारूप परिणाम हैं। रूपवती भार्या की भाँति सुखाद्यात्मिका बुद्धिवृत्ति (चित्तवृत्ति) पुरुष के उपभोग के योग्य है अर्थात् पुरुष के भोग का साधन है। अतः दुःखदायी होने से वृत्तियाँ निरोद्धव्य हैं, ऐसा भाष्यकार अन्त में कहेंगे।

**शङ्का**–दुःखदायी होने से यदि वृत्तियाँ निरोद्धव्य हैं तो सुखदायी होने से उनकी उपादेयता ही क्यों न मान ली जाय? अर्थात् सुखदायी वृत्तियों का निरोध क्यों किया जाय?

**समाधान**–शंका-समाधानार्थ भाष्यकार कहते हैं- 'सुखदुःखेति।' वृत्तियों की सुख-दुःख-मोहात्मकता क्लेशप्रतिपादक सूत्रों में आगे बतलाई जायेगी। यहाँ नाममात्र के लिये ही भाष्यकार क्लेश का प्रतिपादन कर रहे हैं–'**सुखानुशयी राग** इत्यादि।' '**सुखदुःखानुशयी**' का अर्थ है–सुखदुःखविषयक। अर्थात् '**राग**' क्लेश सुखविषयक और '**द्वेष**' क्लेश दुःखविषयक होता है। जिस प्रकार दुःख द्वेष का जनक होता है उसी प्रकार सुख भी राग का जनक होने से हेय अर्थात् त्याज्य है। और मोह तो अविद्यारूप ही होने से शोकादि समस्त दुःखों का कारण है, अतः सर्वथा त्याज्य है। वृत्तियों की निरोद्धव्यता को भाष्यकार बतलाते हैं–'**एता** इति।' अतः दुःखात्मक होने से पूर्ववर्णित

1. क ग घ च छ – **उपसंहरिष्यति**, ख – **उपसंहरति**।
2. क ख घ च छ – **कुतः**, ग – **कथम्**।

समस्त वृत्तियाँ निरोद्धव्य हैं। अर्थात् चित्तवृत्तियों को निरुद्ध करना चाहिये। भाष्यकार प्रस्तुत प्रकरण का उपसंहार करते हैं–'**आसामिति।**' वृत्तियों के निरुद्ध होने पर सम्प्रज्ञात समाधि अथवा असम्प्रज्ञात समाधि प्राप्त होती है॥११॥

भाष्यकार अग्रिम सूत्र को अवतरित करते हैं–

### व्यासभाष्यम्

**अथासां निरोधे क उपाय इति?**

तो फिर इन वृत्तियों के निरोध का कौन सा उपाय है? (उत्तर है)–

### योगसूत्रम्

## अभ्यासवैराग्याभ्यां तन्निरोधः॥१२॥

अभ्यास और वैराग्य से वृत्तियों का निरोध होता है॥१२॥

### व्यासभाष्यम्

**चित्तनदी नामोभयतो वाहिनी वहति कल्याणाय, वहति पापाय च। या तु कैवल्यप्राग्भारा विवेकविषयनिम्ना सा कल्याणवहा। संसारप्राग्भाराऽविवेकविषय-निम्ना पापवहा। तत्र वैराग्येण विषयस्रोतः खिलीक्रियते, विवेकदर्शनाभ्यासेन [1]विवेकस्रोत उद्घाट्यत इत्युभयाधीनश्चित्त[2]वृत्तिनिरोधः॥१२॥**

चित्तरूपी नदी दो दिशा रूप धाराओं में बहती है। अर्थात् भीतर तथा बाहर दोनों तरफ बहने वाली है। वह आत्मकल्याण के लिये (भीतर की तरफ) बहती है और पाप अर्थात् जन्म, मरणादि भीषण कष्टों के लिये (बाहर विषय-संसार की ओर) बहती है। और जो चित्तरूपी नदी कैवल्याभिमुख होकर विवेकविषयमार्गगामिनी होती है अर्थात् विवेकविषय-रूपी मार्ग की तरफ बहा करती है, वह (कल्याण का कारण होने से) 'कल्याणवहा' कही जाती है। और जो संसाराभिमुख होकर अज्ञानविषयरूपी तुच्छ मार्ग की ओर बहती है, वह (दुःख का कारण होने से) 'पापवहा' कही जाती है। चित्तरूपी नदी के इन दोनों प्रवाहों में से बाह्य विषयाभिमुख प्रवाह को 'वैराग्य' के द्वारा रोका जाता है और सत्त्वपुरुषान्यताख्याति रूप विवेकज्ञान के 'अभ्यास' से आत्मज्ञानाभिमुख अन्तःप्रवाह को प्रारम्भ किया जाता है। इस प्रकार चित्तवृत्तियों का निरोध अभ्यास और वैराग्य इन दोनों (साधनों) के अधीन है॥१२॥

---

1. क ख ग घ च छ ज झ थ द ध न प फ ब भ म य र – विवेकस्रोतः, त – कल्याणस्रोतः।
2. क ख ग घ च छ ज झ त थ ध न प फ ब भ म य र – चित्त०, द – च तत्।

## तत्त्ववैशारदी

**निरोधोपायं पृच्छति—अथेति। सूत्रेणोत्तरमाह—अभ्यासवैराग्याभ्यां तन्निरोधः। अभ्यासवैराग्ययोर्निरोधे जनयितव्येऽवान्तरव्यापारभेदेन समुच्चयः, न तु विकल्प इत्याह— चित्तनदीति। प्राग्भारः प्रबन्धः। निम्नता गम्भीरता, अगाधतेति यावत्॥१२॥**

चित्तवृत्तियों के निरोध के उपाय=साधन को पूछा जा रहा है—'**अथेति**।' अर्थात् इन वृत्तियों के निरोध का उपाय क्या है? सूत्र के द्वारा उत्तर दिया जा रहा है— '**अभ्यासेति**।' वृत्तिनिरोध की अवाप्ति में अर्थात् वृत्तिनिरोधविधया होने वाली योग-निष्पत्ति में अभ्यास और वैराग्य इन दोनों साधनों में अवान्तर व्यापार की भिन्नता होने से इनका (अभ्यास-वैराग्य का) समुच्चित हेतुत्व (सांघातिक उपायत्व) विवक्षित है न कि वैकल्पिक हेतुत्व। इसी (तथ्य को तथ्यीकृत करने के) लिये भाष्यकार ने बतलाया है—'**चित्तनदीति**।' यहाँ '**प्राग्भार**' शब्द का अर्थ '**प्रबन्ध**' अर्थात् नैरन्तर्य है, जिससे विषय से सम्बन्धित '**निम्नता**' अर्थात् गंभीरता और अगाधता आती है॥१२॥

**बालप्रिया—**

'**समुच्चयः न तु विकल्पः**'—जिस प्रकार नदी के तीव्र प्रवाह को सेतुबन्ध (पुल-निर्माण) द्वारा नियन्त्रित कर 'कुल्या' आदि माध्यम से क्षेत्राभिमुख कर तिर्यक् अथवा विपरीत प्रवाह वाला किया जाता है, उसी प्रकार '**वैराग्य**' द्वारा चित्तरूपी नदी के विषयप्रवाह (विषयोन्मुखता) को दमित=नियन्त्रित किया जाता है और योगाभ्यास द्वारा चित्तरूपी नदी की '**प्रशान्तवाहिता**' अर्थात् गभीरज्ञानप्रवहणता उन्मुख की जाती है। इस प्रकार चित्तवृत्तिनिरोधार्थ 'द्वार' अर्थात् अवान्तर व्यापार के भेद से '**अभ्यास**' और '**वैराग्य**' की सांघातिक हेतुता प्रतिपादित है, न कि एक द्वारत्वेन व्रीहि और यव की भाँति विकल्प। अर्थात् मुमुक्षु को इन उपायों में से किसी एक उपाय के ग्रहण में ऐच्छिकता नहीं है, अपितु मोक्षार्थी के लिये दोनों उपायों के ग्रहण में अनिवार्यता है। स्वयं श्रीकृष्ण के शब्दों में—'**अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते**।' यहाँ '**च**' अव्यय समुच्चयबोधक है।

'**प्राग्भारः**'—जलप्रवहण के अयोग्य उच्चप्रदेश को '**प्राग्भार**' कहा गया है।

'**निम्नम्**'—जलप्रवहण के योग्य अधोदेश को '**निम्न**' शब्द से बतलाया गया है।

वस्तुनिष्ठ आत्मरूप और अनात्मरूप के भेदमार्ग (ज्ञानरूपी मार्ग) में प्रवाहित होने वाली चित्तनदी कल्याणमय मार्गों से होती हुई कैवल्यरूप गन्तव्य स्थल तक पहुँचती है और आत्मानात्म के अविवेक मार्ग (अज्ञानरूपी कुमार्ग) में प्रवाहित होने वाली चित्तनदी पापमय पथ से विषयोपभोग रूपी भूमि में चक्कर काटती रहती है॥१२॥

**व्यासभाष्यम्**

**मृदुतीव्रो मध्यतीव्रोऽधिमात्रतीव्र इति, ततोऽपि विशेषः। [1]तद्विशेषान्मृदुतीव्रसंवेगस्यासन्नस्ततो मध्यतीव्रसंवेगस्यासन्नतरस्तस्मादधिमात्रतीव्रसंवेगस्याधिमात्रोपायस्यासन्नतमः समाधिलाभः समाधिफलं चेति॥२२॥**

अधिमात्रोपायसंज्ञक योगियों का जो तीव्रसंवेग है, वह भी तीन प्रकार का है—मृदुतीव्रसंवेग, मध्यतीव्रसंवेग तथा अधिमात्रतीव्रसंवेग। इस भेद के कारण अधिमात्रोपाय मृदुतीव्रसंवेगवान् योगी को समाधि और उसका फल शीघ्र, अधिमात्रोपाय मध्यतीव्रसंवेगवान् योगी को शीघ्रतर तथा अधिमात्रोपाय अधिमात्रतीव्रसंवेगवान् योगी को शीघ्रतम प्राप्त होता है॥२२॥

**तत्त्ववैशारदी**

**मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः।** निगदव्याख्यातेन भाष्येण व्याख्यातमिति।२२॥

विस्ताररूप से व्याख्यात भाष्य के द्वारा सूत्रार्थ स्पष्ट हो जाता है॥२२॥

**बालप्रिया—**

मृदुतीव्रसंवेगवान् योगी को समाधि '**आसन्न**', मध्यतीव्रसंवेगवान् योगी को समाधि '**आसन्नतर**' तथा अधिमात्रतीव्रसंवेगवान् योगी को समाधि '**आसन्नतम**' होती है—यही उपाय और संवेग की तरतमता में अन्तर है।

'**अपि**'—सूत्रगत '**अपि**' अव्यय के द्वारा अग्रिम सूत्र '**ईश्वरप्रणिधानाद्वा**' द्वारा प्रतिपादित उपायान्तर से सापेक्षता बतलाई गई है। प्रस्तुत सूत्र द्वारा समाधिलाभ की कालसम्बन्धी तीन श्रेणियाँ बतलाई गई हैं, जब कि अग्रिम उपाय द्वारा समाधिलाभ की एक ही आसन्नतम श्रेणी बतलाई जायेगी॥२२॥

**योगवार्त्तिकम्**

**मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः।** पूर्वसूत्रोक्तविशिष्टेऽन्तर्गतस्य तीव्रत्वस्य **मृदुमध्याधिमात्रत्वेन त्रैविध्यात्ततोऽप्यासन्नादपि। विशेषस्तरतमरूपो भवति पूर्वसूत्रोक्तस्य नवमयोगिन इत्यर्थः। एतदेव व्याचष्टे—ततोऽपि विशेष इत्यन्तेन भाष्येण।** फलितार्थमाह—**तद्विशेषादपीति। तस्माद्विशेषादपि नवमस्य त्रिविधस्यान्तिमानामासन्नतम इत्यर्थः।** अपि शब्द

---

1. क ख ग – तद्विशेषादप्यासन्नमोऽधिमात्रतीव्राधिमात्रोपायस्य समाधिलाभः समाधिफलं चेति, घ प फ ब भ म य र – तद्विशेषान्मृदुतीव्रसंवेगस्यासन्नस्ततो मध्यतीव्रसंवेगस्यासन्नतरस्तस्मादधिमात्रतीव्रसंवेगस्याधिमात्रोपायस्यासन्नतमः समाधिलाभः समाधिफलं चेति, च झ त न – तद्विशेषादप्यासन्नतरस्तीव्राधिमात्रसंवेगस्याधिमात्रोपायस्य। छ थ – तद्विशेषादप्यासन्नतरस्तीव्राधिमात्रसंवेगस्याधिमात्रोपायस्य समाधिलाभः समाधिफलं चेति। अयमयोगात्मकः सर्वापवादकृदात्मोपायप्रत्यया समाधिः, भवनाशोपायदर्शनात् ज द ध – तद्विशेषादपि मृदुतीव्रसंवेगस्यासन्नस्ततो मध्यतीव्रसंवेगस्यासन्नतरस्तस्मादधिमात्रतीव्रसंवेगस्याधिमात्रोपायस्याप्यासन्नतमः

**आगामिसूत्रस्थसाधनापेक्षया। अत्र तीव्राधिमात्रसंवेगस्येत्यपपाठः, अधिमात्रतीव्र इत्युक्त-भाष्यतोऽधिमात्रतीव्रसंवेगस्येत्येव पाठादिति॥२२॥**

पिछले सूत्र में कथित वैशिष्ट्य के अन्तर्गत आने वाली **'तीव्रता'** मृदु, मध्य तथा अधिमात्र की दृष्टि से तीन प्रकार की है। उसमें भी समाधिप्राप्ति की आसन्नता (सन्निकटता) की दृष्टि से तरतमभावरूप अन्तर (विशेष) विद्यमान है। पूर्व सूत्र में यह बतलाया गया है कि नवम योगी को समाधि आसन्नतम होती है। भाष्यकार इसी तथ्य की व्याख्या करते हैं– **'ततोऽपि विशेष इति'** यहाँ तक के भाष्य द्वारा। सूत्र के तात्पर्यार्थ को भाष्यकार बतलाते हैं– **'तद्विशेषादपीति।'** इस विशेषता के कारण ही नवम योगी को समाधि आसन्नतम (अष्टम योगी को आसन्नतर तथा सप्तम योगी को आसन्न) होती है। (भाव यह है कि श्रद्धादि उपायानुष्ठान से समाधिलाभ तथा समाधि का फल कैवल्य तो प्राप्त होता ही है, किन्तु श्रद्धादि उपायानुष्ठान के मृदुत्वादि से फलप्राप्ति में आसन्न, आसन्नतर तथा आसन्नतमरूप कालघटित वैशिष्ट्य आ जाता है। सूत्रगत **'विशेष'** पद का यही तात्पर्य है)। सूत्र में प्रयुक्त 'अपि' शब्द के तात्पर्य को समझाते हुए योगवार्त्तिककार कहते हैं कि सूत्रस्थ 'अपि' शब्द आगामी सूत्र में निर्दिष्ट साधन को ध्यान में रखकर प्रयुक्त हुआ है। भाव यह है कि जिस प्रकार ईश्वरप्रणिधान से समाधिलाभ आसन्नतम होता है, उसी प्रकार अधिमात्रोपाय तीव्रसंवेग से भी समाधि निकटतम रहती है। संग्रहार्थक' **अपि** शब्द के प्रयोग का यही तात्पर्य है। पाठभेद को लेकर योगवार्त्तिककार आगे विचार कर रहे हैं—जहाँ कहीं **'तीव्राधिमात्रसंवेगस्य'** ऐसा पाठ मिलता है, उसे अपपाठ अर्थात् अशुद्ध पाठ समझना चाहिये, क्योंकि **'अधिमात्रतीव्र'** इस भाष्य के अनुसार **'अधिमात्रतीव्र-संवेगस्य'** ऐसा पाठ ही शुद्ध सिद्ध होता है॥२२॥

भाष्यकार अगले सूत्र को अवतरित करते हैं–

### व्यासभाष्यम्

[1]**किमेतस्मादेवा[2]सन्नतमः समाधिर्भवति। अथास्य लाभे भवत्यन्योऽपि कश्चिदुपायो न वेति?–**

क्या पूर्ववर्णित उपाय (अधिमात्रोपाय अधिमात्रतीव्रसंवेग) से समाधि शीघ्रतम सम्पाद्य होती है? किञ्च समाधिलाभ में शीघ्रताकारक कोई अन्य भी उपाय है अथवा नहीं? (तदर्थ सूत्र है) –

1. क ख ग – **किमेतस्मादेवासन्नतमः समाधिर्भवति। अथास्य लाभे भवत्यन्योऽपि कश्चिदुपायो न वेति** १/२२ सूत्रस्य टीका, घ च छ ज झ त थ द ध न प फ ब भ म य र – **किमेतस्माद्......वेति** १/२३ सूत्रस्य अवतरणिका।
2. क ख ग च छ ज झ त थ द न ब भ म – **आसन्नतरः**, घ ध प फ य र – **आसन्नतमः**।

**योगसूत्रम्**

## ईश्वरप्रणिधानाद्वा॥२३॥

ईश्वरप्रणिधान से भी (समाधि और उसका फल शीघ्रतम प्राप्त होता है)॥२३॥

**व्यासभाष्यम्**

**प्रणिधानाद्भक्तिविशेषादावर्जित ईश्वरस्तमनुगृह्णात्यभिध्यानमात्रेण। तद[1]भिध्यानमात्रादपि योगिन आसन्नतमः[2] समाधिलाभः [3]समाधिफलं च भवतीति॥२३॥**

प्रणिधानरूप भक्तिविशेष से अभिमुखीकृत (कृपापूर्वक अभिमुख हुआ) 'ईश्वर' योगी (भक्त) को संकल्पमात्र से अनुगृहीत करता है। ईश्वर के संकल्प (अभिध्यान) मात्र से योगी को समाधिलाभ और उसका फल (कैवल्य) शीघ्रतम प्राप्त होता है॥२३॥

**तत्त्ववैशारदी**

**सूत्रान्तरं पातयितुं विमृशति–किमेतस्मादेवेति। नवा शब्दः संशयनिवर्तकः। ईश्वरप्रणिधानाद्वा। व्याचष्टे–[4]प्रणिधानादिति। प्रणिधानाद्भक्तिविशेषान्मानसाद्वाचिकात्कायिकाद्वाऽऽवर्जितोऽभिमुखीकृतस्तमनुगृह्णाति। अभिध्यानम[5]नागतार्थेच्छा–इदमस्याभिमतमस्त्विति। तन्मात्रेण न व्यापारान्तरेण। शेषं सुगमम्॥२३॥**

अगले सूत्र को अवतरित करने के लिये भाष्यकार विचार कर रहे हैं– '**किमेतस्मादेवेति**' भाष्य में प्रयुक्त '**न वा**' शब्दद्वय सन्देहोन्मूलक है अर्थात् पूर्वकथित इस सन्देह को उन्मूलित करता है कि किसी अन्य उपाय से समाधिलाभ आसन्नतम नहीं होता है। तदर्थ सूत्र है-'**ईश्वरेति**' सूत्र की व्याख्या भाष्यकार करते हैं– '**प्रणिधानादिति**' मानस, वाचिक और कायिक प्रणिधानरूप भक्तिविशेष से आवर्जित अर्थात् अनुकूल हुआ परमात्मा (मेरे भक्त का कल्याण हो–इस संकल्पमात्र से) भक्त का उपकार करता है। भाष्यस्थ '**अभिध्यान**' पद का अर्थ करते हुए

---

1. क ख ग घ फ र – **अभिध्यानात्**, च छ ज झ त थ द ध न प ब भ म य – **अभिध्यानमात्रात्**।
2. क ख ग च छ ज झ त थ द ध न ब भ म – **आसन्नतरः**, घ प फ य र – **आसन्नतमः**।
3. क ख ग च छ ज झ त थ द ध न प ब भ म य – **समाधिफलं**, घ फ र – **फलम्**।
4. क ग छ – **प्रणिधानादिति** उपलभ्यते, क ख ग घ च छ ज झ त न – **प्रणिधानादिति** नोपलभ्यते।
5. क घ च छ ज झ त न – **अनागत०**, ख ग थ द ध – **अनागते**।

तत्त्ववैशारदीकार कहते हैं–'**अभिध्यान**' शब्द का अर्थ है–भविष्यत्कालिक पदार्थ-विषयक इच्छा। इच्छा का स्वरूप है–'भक्त को उसका अभीष्ट प्राप्त हो'। भाष्यस्थ '**अभिध्यानमात्रेण**' के '**मात्रेण**' पद का अर्थ है–अन्य व्यापार किये विना। अर्थात् भक्त के 'ईश्वरप्रणिधान' रूप व्यापार से प्रसन्न हुआ परमात्मा, उपायान्तर के विना, संकल्पमात्र से ही भक्त पर अनुग्रह करता है और उसे उसका अभीष्ट समाधिलाभ तथा समाधिफल प्राप्त कराता है। शेष भाष्य सुगम है॥२३॥

**बालप्रिया–**

'**तन्मात्रेण**'–इस पद का अर्थ है–'**संकल्पमात्र से**।' अर्थात् भक्त (योगी) को अत्यन्त शीघ्र समाधि की प्राप्ति होती है। जैसा कि भगवद्गीता में कहा है–

**अनन्याश्चिन्तयन्तो मां ये जना पर्युपासते।**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्॥९/२२**

इस श्लोक में भगवान् ने स्वयं अपने को योगक्षेम का निर्वाहक कहा है। अतः ईश्वरशरण को ग्रहण कर पूर्वोक्त ईश्वरप्रणिधानरूप भक्ति करना मनुष्यमात्र का परम कर्त्तव्य है॥२३॥

## योगवार्त्तिकम्

**सूत्रान्तरमवतारयितुं पृच्छति–किमेतस्मादेवेति। किमेतस्मादेव तीव्रसंवेगस्याधिमात्रत्वादेवासन्नतमः समाधिर्भवतीत्यादिरर्थः। न वेति [1]वैकल्पिकत्वार्थः। विकल्पमेव सिद्धान्तयति सूत्रेण–ईश्वरप्रणिधानाद्वा।**

सूत्रान्तर को अवतरित करने के लिये भाष्यकार पूछते हैं–'**किमेतस्मादेवेति।**'

**शङ्का**–क्या अधिमात्रोपाय तीव्रसंवेग से ही समाधिलाभ आसन्नतम होता है अथवा किसी अन्य उपाय से भी?

**समाधान**–भाष्यकार उत्तर देते हैं–'**न वेति।**' अधिमात्रोपाय तीव्रसंवेग ही समाधिलाभ का अन्यतम साधन नहीं है, अपितु समाधि के आसन्नतम होने का अन्य भी उपाय है। '**न वा**' के द्वारा भाष्यकार ने प्रश्न का विकल्परूप प्रस्तुत किया है। इसी विकल्प को सूत्र के द्वारा सिद्धान्तित किया जा रहा है–'**ईश्वरेति।**'

## योगवार्त्तिकम्

**विशेष इत्यनेनान्वयः। प्रणिधानमत्र न द्वितीयपादवक्ष्यमाणं सर्वकर्मार्पणं[2] किं त्वसंप्रज्ञातकारणीभूतसमाधिर्भावनाविशेष एव, तज्जपस्तदर्थभावनमित्यागामिसूत्रेणै-**

---

1. क ख ग च छ – **वैकल्पिकत्वार्थः**, ग – ˋकल्पिक **इत्यर्थः**।
2. ख ग – **सर्वकर्मार्पणं** – उपलभ्यते, क घ च छ – **सर्वकर्मार्पणं** नोपलभ्यते।

वा[1]त्म[2]प्रणिधानस्यात्र लक्षणीयत्वात्। तथा च सूत्रद्वयस्यायम[3]र्थः–प्रज्ञाऽन्तो यो योगोपायो जीवात्मपरमात्मसाधारणविषयक उक्तः तत्र जीवात्मप्रज्ञा[4]ऽन्तस्योपायस्याधिमात्रतीव्रसंवेगत्वे सत्येवासन्नतमोऽसम्प्रज्ञातो भवति, [5]परमात्मप्रज्ञाऽन्तस्योपायस्य त्वधिमात्रतीव्रसंवेगत्वाभावेऽप्यासन्नतमोऽसंप्रज्ञातो भवतीति। एवं च सति मुख्यकल्पानुकल्पभेदेन परमात्मजीवात्मप्रज्ञयोर्योगमोक्षहेतुत्वं बोध्यम्, उभयप्रज्ञयोरेव देहाद्यभिमाननिवर्त्तकत्वेन परवैराग्यद्वारकत्वसाम्येऽप्यतितीव्राभ्यासं विनाऽपि परमात्मप्रज्ञाया आसन्नतमयोगहेतुतया श्रेष्ठ्यात्, ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्चेत्यागामिसूत्रेणाधिकद्वारकीर्त्तनात्। अत एव श्रुतिस्मृतीतिहासादिषु प्रायशो ब्रह्मज्ञानमेव मोक्षहेतुतयोपदिश्यते, कदाचिदेव तु स्वातन्त्र्येण जीवतत्त्वज्ञानमिति। यदि चोभयोरेव तुल्यवद्विकल्पः स्यात्तर्हि तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय, तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ, अमृतस्यैष सेतुः इत्यादिश्रुतयो व्याकुप्येरन्। तथा–

स ईश्वरो व्यष्टिसमष्टिरूपो [6]व्यक्तस्वरूपोऽ[7]प्रकटस्वरूपः।
सर्वेश्वरः सर्वविशेषवेत्ता समस्तशक्तिः परमेश्वरात्मा॥
प्रज्ञायते[8] येन उदस्तदोषं शुद्धं परं निर्मलमेकरूपम्।
संदृश्यते वाऽप्यवगम्यते वा तज्ज्ञानमज्ञानमतोऽन्यदुक्तम्॥

इत्यादिस्मृतयोऽपि व्याकुप्येरन्। मुख्यकल्पत्वे तु राजमार्ग एव मम[9] इति वाक्यवत् तादृशवाक्यानां मुख्यसाधनपरतयोपपत्तिरिति दिक्।

पूर्वसूत्रगत 'विशेष' पद का प्रकृत सूत्र के साथ अन्वय (अध्याहार) किया जाता है। (अन्वित रूप है–'ईश्वरप्रणिधानाद्वा विशेषः')। प्रकृत में 'प्रणिधान' शब्द से द्वितीय पादान्तर्वर्ती प्रणिधान (जो शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः २/३२ सूत्र में वर्णित है) का ग्रहण नहीं होता है, अपितु असम्प्रज्ञात की कारणीभूता समाधि जो भावनाविशेषरूपा ही है, वही यहाँ विवक्षित है। क्योंकि 'तज्जपस्तदर्थभावनम्' १/२८ इस आगामी सूत्र के द्वारा आत्मप्रणिधान अर्थात् आत्मचिन्तन ही यहाँ

---

1. क ख च छ – आत्म० उपलभ्यते, ग घ – आत्म० नोपलभ्यते।
2. क ख च छ – प्रणिधानस्यात्र, ग घ – अत्र प्रणिधानस्य।
3. क घ च छ – अर्थः, ख ग – भावः।
4. क ग च छ – अन्तस्य, ख घ – तस्य।
5. क ग घ च छ – परमात्मप्रज्ञाऽन्तस्योपायस्य त्वधिमात्रतीव्रसंवेगत्वाभावेऽप्यासन्नतमोऽसम्प्रज्ञातो भवतीति उपलभ्यते, ख – परमात्म......भवतीति नोपलभ्यते।
6. क घ – अव्यक्त०, ख ग च छ – व्यक्त०।
7. क घ – प्रकट०, ख ग च छ अप्रकट०।
8. क घ च छ – प्रज्ञायते, ख ग – संज्ञायते।
9. क ख घ च छ – मम, ग – मार्गः।

वर्णनीय है। इस प्रकार दो सूत्रों को मिलाकर (विगत एवं वर्तमान सूत्र के आधार पर) यह अर्थ निष्पन्न होता है–जीवात्मा तथा परमात्मा के विषय वाला अर्थात् जीवात्मपरमात्मसाधारणविषयक प्रज्ञापर्यन्त जो योग का उपाय बतलाया गया है, उसमें से जीवात्मप्रज्ञापर्यन्त श्रद्धादि उपाय के अधिमात्रतीव्रसंवेग वाला होने पर ही असम्प्रज्ञात समाधि **'आसन्नतम'** होती **है,** जब कि परमात्मप्रज्ञापर्यन्त श्रद्धादि उपाय के अधिमात्रतीव्र संवेग वाला न होने पर भी असम्प्रज्ञात समाधि **'आसन्नतम'** (निकटतम) होती है। भाव यह है कि परमात्मविषयक ज्ञान और जीवात्मविषयक ज्ञान में अन्तर यह है कि परमात्मविषयक ज्ञान अधिमात्रतीव्र संवेग की अपेक्षा किये विना भी असम्प्रज्ञात समाधि की आसन्नतमता में हेतु है, जब कि जीवात्मविषयक ज्ञान से समाधि की आसन्नतमता के लिये अधिमात्रतीव्रसंवेग की आवश्यकता रहती है। इस प्रकार मुख्यकल्प (मुख्य पद्धति) और अनुकल्प (गौण पद्धति) के भेद से परमात्मविषयक तथा जीवात्मविषयक दोनों प्रज्ञाओं को योग तथा मोक्ष का हेतु माना गया है। यद्यपि **'जीवात्मविषयक'** प्रज्ञा और **'परमात्मविषयक'** प्रज्ञा दोनों में देहादि के प्रति आत्माभिमान की निवर्त्तकता के द्वारा परवैराग्य का द्वारकत्व तुल्य होने पर भी अर्थात् देहादि में आत्मत्वबुद्धि की निवृत्ति कराते हुए तथाकथित जीवात्मपरमात्मविषयक दोनों प्रज्ञाओं में परवैराग्योपस्थापन की क्षमता होने पर भी **'परमात्मविषयक'** प्रज्ञा अत्यन्त प्रबल योगानुष्ठान के विना भी आसन्नतम योग का कारण होने से (जीवात्मविषयक प्रज्ञा की अपेक्षा) श्रेष्ठ है। और **'ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च'** १/२९ इस आगामी सूत्र **के** द्वारा भी परमात्मविषयक प्रज्ञा को अन्य व्यापारों (द्वारों) के द्वारा आसन्नतम समाधिलाभ का हेतु बतलाया जायेगा। इसी वैशिष्ट्य के कारण श्रुति, स्मृति इतिहासादि ग्रन्थों में ब्रह्मज्ञान को ही मोक्ष के हेतुरूप से प्रतिपादित किया गया है। बहुत कम स्थलों पर ही स्वतन्त्ररूप से जीवविषयक ज्ञान को मोक्ष का कारण बतलाया गया है। यदि **'जीवात्मविषयक'** प्रज्ञा और **'परमात्मविषयक'** प्रज्ञा दोनों में मोक्षहेतुता तुल्य मानी जाय अर्थात् तुल्य उपायानुष्ठान द्वारा दोनों से आसन्नतम समाधिलाभ की बात कही जाय तो निम्नाङ्कित श्रुतियाँ क्रुद्ध हो जायेंगी– **'तमेव...अयनाय, तमेवैकं... विमुञ्चथ, अमृतस्यैष सेतुः'** अर्थात् 'उसी परमात्मतत्त्व को जानकर व्यक्ति मृत्यु को पार करता है। तदतिरिक्त और कोई उपाय मृत्यु को पार करने का नहीं है' श्वे. ६/१५; 'उसी एक परमात्मतत्त्व को जानो और सब वाणियों को छोड़ दो' मुण्डकोप. २/२/५; 'अमृत को पाने का यही सेतु (मार्ग) है।' इसी प्रकार **'स ईश्वरो...ज्ञानमतोऽन्यदुक्तम्'** वि. पु. ६/५/८६ इत्यादि स्मृतिवाक्य भी कुपित हो जायेंगे। स्मृतिवाक्य का अर्थ है–'यह ईश्वर व्यष्टिसमष्टिरूप, अभिव्यक्तस्वरूप तथा

अनभिव्यक्तस्वरूप है। वह सर्वेश्वर समस्त विशेष को जानने वाला, समस्त शक्तिसम्पन्न और परमेश्वर है। समस्त दोषों से रहित, शुद्ध, श्रेष्ठ, निर्मल तथा एकरूप ब्रह्म जिसके द्वारा जाना जाता है अथवा देखा जाता है, वही ज्ञान है। इसके अतिरिक्त सब कुछ अज्ञानरूप कहा गया है।' इस प्रकार 'यह मेरा राजमार्ग है'—इस लौकिक वाक्य की भाँति परमात्मप्रज्ञाविषयक मुख्यकल्प (प्रधान विधा) में परमात्मप्रतिपादक वाक्य समाधि के प्रधान (मुख्य) साधन के रूप से उपपन्न हो जाते हैं।

सम्प्रति, जीवात्मविषयक प्रज्ञा की अपेक्षा परमात्मविषयक प्रज्ञा के वैशिष्ट्य को शंका-समाधान की शैली से सिद्ध किया जा रहा है—

**योगवार्त्तिकम्**

**ननु जीवप्रज्ञाऽऽसन्नतमयोगोत्पादनार्थमभ्यासस्यातितीव्रत्वमपेक्षते; ईश्वरप्रज्ञा तु नापेक्षत इत्यत्र का युक्तिरित्याकाङ्क्षायामाह—प्रणिधानादित्यादि। ब्रह्मात्मना चिन्तनरूपतया प्रेमलक्षणभक्तिरूपाद्वक्ष्यमाणात्प्रणिधानादावर्जितो[1]ऽभिमुखीकृत ईश्वरस्[2]तं ध्यायिनमभिध्यान-मात्रेण अस्य समाधिमोक्षावासन्नतमौ भवेतामितीच्छामात्रेण रोगाशक्त्यादिभिरुपा-यानुष्ठानमान्द्येऽप्यनुगृह्णात्यानुकूल्यं भजते; अतस्तस्मादभिध्यानादपि प्रणिधाननिष्पत्त्यादिद्वारा योगिनामासन्नतमौ समाधिमोक्षौ भवत इत्यर्थः॥२३॥**

**शङ्का**—जीवात्मविषयक प्रज्ञा को आसन्नतम योग की प्राप्ति के लिये अभ्यास की अतितीव्रता अपेक्षित रहती है, किन्तु परमात्मविषयक प्रज्ञा को यह अपेक्षा नहीं रहती है, इसमें युक्ति क्या है?

**समाधान**—ऐसी शंका होने पर भाष्यकार बतलाते हैं—'**प्रणिधानादित्यादि**' ब्रह्म में आत्मचिन्तन ('**अहं ब्रह्मास्मि**'—इत्याकारक भावना) द्वारा आगे बतलाया जाने वाला प्रेमलक्षणभक्तिरूप प्रणिधान करने से (भक्त के) अभिमुख (अनुकूल, आवर्जित) हुआ ईश्वर—'भक्त को समाधि और मोक्ष आसन्नतम होवे'—इत्याकारक संकल्प (अभिध्यान) मात्र से, रोग और अशक्ति के कारण श्रद्धादि उपायानुष्ठान में असमर्थ (अकर्मण्य) होने पर भी—ध्यान करने वाले भक्त पर अनुग्रह करता है। अतः ईश्वर के चिन्तनमात्र से भी प्रणिधान की निष्पत्ति आदि द्वारा योगियों को समाधि और मोक्ष आसन्नतम होते हैं। (इस प्रकार परमात्मविषयक प्रज्ञा की अपेक्षा जीवात्मविषयक प्रज्ञा को आसन्नतम समाधि के लिये उपायानुष्ठान के प्रति अतितीव्राभ्यास की क्यों आवश्यकता रहती है, यह शंका दूर हो जाती है)॥२३॥

---

1. क – **अभिमुखः**, ख ग घ च छ – **अभिमुखी०**।
2. ख – **स्वध्यायिनं**, ख ग घ च छ – **तं ध्यायिनम्**।

भाष्यकार अग्रिम सूत्र की अवतरणिका लिखते हैं–

**व्यासभाष्यम्**

**अथ प्रधानपुरुषव्यतिरिक्तः कोऽयमीश्वरो नामेति?**

अच्छा तो यह बतलाईये कि प्रकृति और पुरुष से अतिरिक्त 'ईश्वर' कौन है? (उत्तर है) –

**योगसूत्रम्**

**क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः॥२४॥**

क्लेश, कर्म, विपाक और आशय से अस्पृष्ट एक विशेष प्रकार का पुरुष 'ईश्वर' कहलाता है॥२४॥

**व्यासभाष्यम्**

**अविद्यादयः क्लेशाः, कुशलाकुशलानि कर्माणि, तत्फलं विपाकः, तदनुगुणा वासना आशयाः। ते च मनसि वर्तमानाः पुरुषे व्यपदिश्यन्ते, स हि तत्फलस्य भोक्तेति। यथा जयः पराजयो वा योद्धृषु वर्तमानः स्वामिनि व्यपदिश्यते। यो [1]ह्यनेन भोगेनापरामृष्टः स पुरुषविशेष ईश्वरः। कैवल्यं प्राप्तास्तर्हि सन्ति च बहवः केवलिनः, ते हि त्रीणि बन्धनानि छित्त्वा कैवल्यं प्राप्ताः। ईश्वरस्य च तत्संबन्धो न भूतो न भावी। यथा मुक्तस्य पूर्वा बन्धकोटिः प्रज्ञायते[2], नैवमीश्वरस्य। यथा वा प्रकृतिलीनस्योत्तरा बन्धकोटिः संभाव्यते, नैवमीश्वरस्य। स तु सदैव मुक्तः सदैवेश्वर इति। योऽसौ प्रकृष्टसत्त्वोपादानादीश्वरस्य शाश्वतिक उत्कर्षः स किं सनिमित्त आहोस्विन्निर्निमित्त इति? तस्य शास्त्रं निमित्तम्। शास्त्रं पुनः किंनिमित्तम्? प्रकृष्टसत्त्वनिमित्तम्। एतयोः शास्त्रोत्कर्षयोरी[3]श्वरसत्त्वे वर्तमानयोरनादिः सम्बन्धः। एतस्मादेतद्भवति सदैवेश्वरः सदैव मुक्त इति। तच्च तस्यैश्वर्यं साम्यातिशयविनिर्मुक्तम्, न तावदैश्वर्यान्तरेण तदतिशय्यते। यदेवातिशयि [4]स्यात्तदेव तत्स्यात्। तस्माद्यत्र काष्ठाप्राप्तिरैश्वर्यस्य स ईश्वरः। न च तत्समानमैश्वर्यमस्ति। कस्मात्? द्वयोस्तुल्ययोरेकस्मिन्युगपत्कामितेऽर्थे नवमिदमस्तु पुराणमिदमस्त्वित्येकस्य सिद्धावितरस्य प्राकाम्यविघातादूनत्वं प्रसक्तम्। द्वयोश्च**

---

1. क ख ग घ च छ ज झ त थ द ध न प फ ब भ म य र – हि, ख – तु।
2. क ख ग घ च ज झ त द ध न प फ ब भ म य र – प्रज्ञायते, छ थ – प्रजायते।
3. क ख ग घ च छ ज झ थ द ध न प फ ब भ म य र – ईश्वरसत्त्वे, त – ईश्वरत्वे।
4. घ च छ ज झ त थ द ध न प फ ब भ म य र – स्यात् उपलभ्यते, क ख ग – स्यात् नोपलभ्यते।

**तुल्ययोर्युगपत्कामितार्थप्राप्तिर्नास्ति, अर्थस्य विरुद्धत्वात्। तस्माद्यस्य साम्या[1]तिशयैर्विनिर्मुक्तमैश्वर्यं स [2]एवेश्वरः स च[3] पुरुषविशेष इति॥२४॥**

अविद्या, अस्मिता, राग, द्वेष तथा अभिनिवेश—ये 'क्लेश' हैं। धर्म और अधर्म 'कर्म' हैं। कर्म का फल 'विपाक' है। सुख-दुःख के भोग (विपाक) से बनने वाली वासना को 'आशय' कहते हैं। ये क्लेशादि (चारों) चित्त में विद्यमान रहते हैं, फिर भी (जीवात्मरूप) पुरुष में उनका आरोप करके व्यवहार किया जाता है। इसी से पुरुष बुद्धिगत सुख-दुःखरूप फल का 'भोक्ता' कहा जाता है। जैसे—जय अथवा पराजय समस्त योद्धा सैनिकों में वर्तमान रहकर भी सेनापति (राजा) में व्यपदिष्ट (आरोपित) होती है। जो 'पुरुषविशेष' इस औपाधिक भोग से भी अव्यवहृत अर्थात् अस्पृष्ट है, वह 'ईश्वर' कहलाता है। यद्यपि 'कैवल्य' को प्राप्त हुए बहुत से 'केवली' (मुक्त पुरुष) हैं, जिन्होंने तीनों प्रकार के बन्धनों को काटकर 'कैवल्य' प्राप्त किया है, (किन्तु ये 'ईश्वर' नहीं हैं क्योंकि) 'ईश्वर' का तो इन बन्धनों से न कभी सम्बन्ध था और न कभी भविष्य में सम्बन्ध होने वाला है। जैसे, मुक्तपुरुष की पूर्वकाल में अर्थात् मुक्ति से पूर्व बन्धन की स्थिति रहती है, ऐसा बन्धन 'ईश्वर' का कभी भी नहीं रहता है। अथवा जैसे प्रकृतिलीन योगी को अधिकार-समाप्ति के अनन्तर (पुनर्जन्मरूप) उत्तरबन्धदशा की सम्भावना रहती है, ऐसा उत्तरकालिक बन्ध ईश्वर का नहीं होता है। ईश्वर तो सदैव 'मुक्त' और सदैव 'ईश्वर' रहता है। जो यह विशुद्धसत्त्वात्मक चित्तरूप उपाधि को धारण करने से ईश्वर का नित्य सर्वज्ञत्वादिरूप उत्कर्ष है, वह क्या सप्रमाण है अथवा निष्प्रमाण है? (उत्तर है कि वह सप्रमाण है)। ईश्वर के उत्कर्ष में शास्त्र प्रमाण है। तो फिर उस शास्त्र (की प्रामाणिकता) में क्या प्रमाण है? (उत्तर है)—शुद्धसत्त्वरूप ईश्वरोपाधि शास्त्र की प्रामाणिकता में हेतु (प्रमाण) है। ईश्वरोपाधिरूप शुद्धसत्त्व में वर्तमान इन शास्त्र और ईश्वरोपाधि का 'अनादि' सम्बन्ध है। इससे यह सिद्धान्तित होता है कि वह 'पुरुषविशेष' सदैव 'ईश्वर' है (ऐश्वर्य से युक्त है) और सदैव मुक्त है। ईश्वर का यह ऐश्वर्य समानता एवं अतिशय से रहित है। ईश्वर का ऐश्वर्य किसी

---

1. क ग च छ ज झ त थ द ध न ब भ म य – **अतिशयैः**, ख घ प फ र – **अतिशय**०।
2. ग च छ ज झ त थ द ध न ब भ म य – **एव** उपलभ्यते, क ख घ प फ र – **एव** नोपलभ्यते।
3. क ख ग घ च छ ज झ त थ द ध न प फ ब भ य र – **च** उपलभ्यते, म – **च** नोपलभ्यते।

के ऐश्वर्य से कम नहीं किया जा सकता है। जो ऐश्वर्य सभी ऐश्वर्यों की अपेक्षा अतिशय है, वही ऐश्वर्य 'निरतिशय' कहलाता है। अतः ऐश्वर्य की जहां अन्तिम सीमा है, वही 'ईश्वर' है। और ईश्वर के ऐश्वर्य के बराबर किसी का ऐश्वर्य नहीं है। (ऐसा क्यों?)–यदि किसी अन्य के ऐश्वर्य को ईश्वर के ऐश्वर्य के समान माना जाय तो सदृश ऐश्वर्य वाले दोनों में एक ही वस्तु के विषय में एक ही काल में यदि 'यह नवीन हो' तथा 'यह प्राचीन हो'–ऐसी विपरीत कामना हो तो एक की कामना के सिद्ध होने पर दूसरे की इच्छा का विघात होने से न्यूनता होगी। क्योंकि एक ही पदार्थ में नवीनत्व और पुरातनत्व का परस्पर विरोध है। इस प्रकार दोनों के तुल्य ऐश्वर्यवान् होने पर एक ही काल में दोनों को अभिलषित अर्थ की प्राप्ति नहीं हो सकती है। अतः (इन विरोधाभासों को देखते हुए शास्त्रपुरस्सर यह सिद्धान्तित होता है कि)–जिसका ऐश्वर्य साम्य और अतिशय से रहित है, वही 'ईश्वर' है और वही 'ईश्वर' (बद्ध, मुक्त, अणिमादि ऐश्वर्यसम्पन्न सर्वविध जीवरूप पुरुष की अपेक्षा विशिष्ट होने से) 'पुरुषविशेष' है॥२४॥

## तत्त्ववैशारदी

**ननु चेतनाचेतनाभ्यामेव व्यूढं नान्येन विश्वम्। ईश्वरश्चेदचेतनस्तर्हि प्रधानम्, प्रधानविकाराणामपि प्रधानमध्यपातात्। तथा च न तस्यावर्जनम्, अचेतनत्वात्। अथ चेतनस्तथापि चितिशक्तेरौदासीन्यादसंसारितया चास्मितादिविरहात्कुत आवर्जनं कुतश्चाभिध्यानमित्याशयवानाह–अथ प्रधानेति। अत्र सूत्रेणोत्तरमाह–क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः। अविद्यादयः क्लेशाः। क्लिश्यन्ति खल्वमी पुरुषं सांसारिकं विविधदुःखप्रहारेणेति। कुशलाकुशलानीति धर्माधर्माः। तेषां च कर्मजत्वादुपचारात्कर्मत्वम्। विपाको जात्यायुर्भोगाः। [1]तदनुगुणा विपाकानुगुणा वासनास्ताश्चित्तभूमावाशेरत इत्याशयाः। न हि करभजातिनिर्वर्तकं कर्म प्राग्भवीयकरभभोगभावितां भावनां न यावदभिव्यनक्ति तावत्करभोचिताय भोगाय कल्पते। तस्माद् भवति करभजात्यनुभवजन्मा भावना करभविपाकानुगुणेति।**

**शङ्का–** पूर्व सूत्र से प्राप्त 'ईश्वर' तत्त्व को लेकर उसके स्वरूप के विषय में विचार किया जा रहा है– यह निखिल संसार चेतन और अचेतन दो प्रकार के तत्त्वों से ही परिव्याप्त है। ईश्वर को अचेतन मानते हुए उद्भावना की जा रही है– यदि ईश्वर अचेतन(जड़) है तो अचेतनकोटिक 'प्रधान' के अन्तर्गत है, क्योंकि प्रधान का विकारभूत कार्यजात भी 'प्रधान' में अन्तर्हित होता है। ऐसी स्थिति में अचेतन होने के कारण ईश्वर द्वारा अभिमुखीकरण (जो चेतन का व्यापार है)

---

1. ख ग थ द ध – तदनुगुणाः उपलभ्यते, क घ च छ ज झ त न – तदनुगुणाः नोपलभ्यते।

क्रिया सम्भव नहीं है। ईश्वर को चेतन मानते हुए उद्‌भावना की जा रही है—यदि ईश्वर को चेतन माना जाय तो औदासीन्य तथा असंसारी होने से अस्मितादि से रहित होने के कारण चैतन्यशक्ति (ईश्वर) में अभिमुखता तथा संकल्पता कैसे सम्भव हो सकती है? अर्थात् कथमपि सम्भव नहीं हो सकती है—इसी तथ्य को दृष्टिगत रखते हुए निरीश्वर सांख्यवादी आशंका करते हैं—'**अथ प्रधानेति**।' अर्थात् प्रकृति और पुरुष से भिन्न कौन यह अभिमत 'ईश्वर' तत्त्व है? तदर्थ पतञ्जलि सूत्र द्वारा उत्तर देते हैं—'**क्लेशेति**।' तत्त्ववैशारदीकार भाष्य को उठाते हैं—'**अविद्यादयः क्लेशा इति**।' अविद्यादि को '**क्लेश**' कहते हैं, क्योंकि ये अनन्त (नानाविध) दुःखों के द्वारा सांसारिक पुरुष को पीड़ित कर उसे क्लेश प्रदान करते हैं। '**कुशलाकुशलानीति**।' धर्म तथा अधर्म को (क्रमशः) '**कुशल**' तथा '**अकुशल**' कहते हैं। धर्माधर्म की उत्पत्ति कर्म से होती है, अतः औपचारिक रूप से धर्माधर्म को '**कर्म**' कहते हैं। शब्दान्तर में शुभाशुभ कर्म धर्माधर्मरूप हैं अथवा धर्माधर्म में कर्मत्व उपचरित है, क्योंकि कार्यकारण में अभेद विवक्षित है। कर्मजन्य जाति, आयु तथा भोगरूप फल को '**विपाक**' कहते हैं। कर्मजन्य फलानुरूप वासना, जो चित्तभूमि में शयन करती है, '**आशय**' संज्ञा से अभिहित है। कर्मजन्य फलोपभोग में वासना की भूमिका (सक्रियता) पर प्रकाश डालते हुए तत्त्ववैशारदीकार कहते हैं—करभरूप जाति (हाथी शरीर) को निष्पादित (कार्यान्वित) कराने वाला कर्म तब तक करभोचित भोग को सम्पादित नहीं कर सकता है, जब तक पूर्वजन्मीय करभभोगजन्य वासना की अभिव्यक्ति नहीं हो जाती है। अतः यह सिद्ध होता है कि करभजाति के अनुभव से उत्पन्न वासना करभयोनि में प्राप्त होने वाले फल के अनुरूप होती है।

ऊपर '**क्लिश्यन्ति खल्वमी पुरुषं**'—वाक्य द्वारा यह संकेतित किया गया है कि क्लेशादि शृंखला से पुरुष प्रभावित होता है, उसी के आधार पर पूर्वपक्षी की ओर से शंका की जा रही हैं—

## तत्त्ववैशारदी

**नन्वमी क्लेशादयो बुद्धिधर्मा न कथंचिदपि पुरुषं परामृशन्ति। तस्मात्पुरुषग्रहणादेव तदपरामर्शसिद्धेः कृतं क्लेशकर्मेत्यादिनेत्यत आह—[1]त इति। ते च मनसि वर्तमानाः सांसारिके पुरुषे व्यपदिश्यन्ते। कस्मात्? स हि तत्फलस्य भोक्ता चेतयितेति। तस्मात्पुरुषत्वादीश्वरस्यापि तत्संबन्धः प्राप्त इति तत्प्रतिषेध उपपद्यत इत्याह—[2]य इति। यो ह्यनेन बुद्धिस्थेनापि पुरुषमात्रसाधारणेन भोगेनापरामृष्टः स पुरुषविशेष ईश्वरः। विशिष्यत इति विशेषः। पुरुषान्तराद्व्यवच्छिद्यते।**

---

1. थ द ध – **त इति** उपलभ्यते, क ख ग घ च छ ज झ त न – **त इति** नोपलभ्यते।
2. थ द ध – **य इति** उपलभ्यते, क ख ग घ च छ ज झ त न – **य इति** नोपलभ्यते।

**शङ्का**–(सांख्ययोगमत में) ये क्लेशादि, बुद्धि के धर्म हैं। ये कभी भी पुरुष के धर्म नहीं माने जाते हैं। (अर्थात् चित्तधर्मक क्लेशादि चेतन पुरुष में कथमपि सम्भव नहीं हैं। अतः पुरुष में क्लेशादि का निषेध प्रतिपादित करना व्यर्थ है, इसी को ध्यान में रखकर कहा जा रहा है–) इसीलिये (सूत्र में) '**पुरुष**' पद के ग्रहणमात्र से ही उसमें (पुरुष में) क्लेशादि की असंस्पृष्टता स्वतः सिद्ध हो जाती है, तो फिर सूत्र में 'क्लेश, कर्म' आदि व्यर्थ में क्यों गृहीत हुए हैं?

**समाधान**–इस पर भाष्यकार कहते हैं–'**त इति**।' यह सत्य है कि क्लेशादि बुद्धि के धर्म हैं अर्थात् बुद्धिनिष्ठ हैं, किन्तु सांसारिक (अविद्याग्रस्त) पुरुष में इनका उपचार (व्यवहार, औपाधिक अवस्थान) किया जाता है।

**शङ्का**–ये क्लेशादि पुरुष में किस प्रकार से उपचरित होते हैं?

**समाधान**–(ये क्लेशादि पुरुष के भोग्यरूप से व्यवहृत होते हैं इसलिये) पुरुष ही क्लेशादिजन्य फल का भोक्ता अर्थात् चेतयिता माना जाता है अर्थात् अविवेकग्रस्त पुरुष बुद्धिगत सुख-दुःख को स्वगत धर्म समझकर सुखी-दुःखी होता है। इस प्रकार पुरुष में उपाधिवश सुख-दुःख की विद्यमानता है। पुरुषत्व की दृष्टि से क्लेशादि का सम्बन्ध ईश्वर में भी प्राप्त होता है, इसी का प्रतिषेध करने के लिये सूत्र में '**क्लेशादि**' पद का ग्रहण किया गया है। इसी तथ्य को भाष्यकार बतलाते हैं–'**य इति**।' जो; बुद्धिनिष्ठ होते हुए भी पुरुषसामान्य में आपाततः प्रतीत होने वाले औपाधिक भोग से सर्वथा असम्पृक्त है, उस पुरुषविशेष को '**ईश्वर**' कहते हैं। '**विशिष्यत इति विशेषः**' इस व्युत्पत्ति के अनुसार पुरुषसामान्य से 'विशिष्ट' अर्थात् विलक्षण होने के कारण ईश्वर को '**पुरुषविशेष**' कहते हैं। यही औपाधिक भोगशून्यत्व पुरुषविशेष को पुरुषसामान्य से पृथक् करता है।

'**पुरुषविशेष**' में '**विशेष**' पद के प्रयोग द्वारा पुरुषसामान्य को व्यावर्त्य बतलाया गया। सम्प्रति, '**विशेष**' पद के द्वारा व्यावर्त्य उन सब विभिन्नकोटिक पुरुषों की मान्यता को स्पष्ट करते हुए तत्त्ववैशारदीकार कहते हैं–

### तत्त्ववैशारदी

**विशेष[1]पदस्य व्यावर्त्यं दर्शयितुकामः परिचोदनापूर्वं परिहरति–कैवल्यं प्राप्तास्तर्हीति। प्रकृतिलयानां प्राकृतो बन्धः। वैकारिको बन्धो[2] विदेहानाम्। दक्षिणाबन्धो दिव्यादिव्यविषय[3]भोगभाजाम्। तान्यमूनि त्रीणि बन्धनानि। प्रकृतिभावनासंस्कृतमनसो हि देहपातान-**

1. क ग घ च छ ज झ त न – **पदस्य**, क थ द ध – **पद**०।
2. क ख ग घ च छ ज झ त न – **बन्धः** उपलभ्यते, थ द ध – **बन्धः** नोपलभ्यते।
3. क ख ग घ च छ ज झ त न – **भोग**० उपलभ्यते, थ द ध – **भोग**० नोपलभ्यते।

**न्तरमेव प्रकृतिलयतामापन्ना इति तेषां[1] पूर्वा बन्धकोटिः प्रज्ञायते[2], तेनोत्तरकोटिविधानमात्रम्। इह तु पूर्वापरकोटिनिषेध इति। संक्षिप्य विशेषं दर्शयति–स तु सदैव मुक्तः सदैवेश्वर इति। ज्ञानक्रियाशक्तिसंपद् ऐश्वर्यम्।**

सूत्र में प्रयुक्त '**विशेष**' पद के द्वारा व्यावृत्त होने योग्य (तिरस्करणीय) को दिखलाने के इच्छुक भाष्यकार निर्देशपूर्वक उसका परिहार करते हैं–**कैवल्यं प्राप्तास्तर्हीति।** (सूत्र में '**विशेष**' पद का प्रयोग नहीं करेंगे तो मुक्तादि पुरुषों में ईश्वर का लक्षण अतिव्याप्त होगा। अतः '**विशेष**' पद के द्वारा समस्त व्यावर्त्य पुरुषों की व्यावृत्ति हो जाती है। इसी का दिग्दर्शन कराया जा रहा है)–प्रकृतिलयों का (अनात्मभूत प्रकृति में आत्मत्वेन चिन्तन करने वालों का) '**प्राकृत**' बन्ध होता है। विदेहों का (भूतेन्द्रियात्मवादियों का) '**वैकारिक**' बन्ध होता है तथा दिव्य=अलौकिक एवं अदिव्य=लौकिक विषयों का सेवन करने वालों का '**दक्षिणा**' बन्ध होता है। ये तीन प्रकार के बन्ध हैं। प्रकृति में आत्मविषयक भावना से संस्कृत (भावित) चित्त वाले योगी (षाट्कौशिक) शरीरत्याग के पश्चात् ही प्रकृतिलयत्व को प्राप्त होते हैं। इस प्रकार इनका '**पूर्वकोटिक**' बन्ध तो सुस्पष्ट है। इसी से भाष्यकार ने प्रकृतिलीन आदि अनात्मचिन्तकों के '**उत्तरकोटिक**' बन्ध को भी प्रदर्शित किया है और ईश्वर में पूर्वकालिक तथा उत्तरकालिक दोनों प्रकार के बन्धनों का निषेध किया है। भाष्यकार पुरुषसाधारण का विषय-संक्षेप करके पुरुषविशेष को प्रदर्शित करते हैं–'**स तु सदैव मुक्तः सदैवेश्वर इति।**' अर्थात् सर्वदा मुक्त 'पुरुषविशेष' सर्वदा 'ज्ञानशक्ति' और 'क्रियाशक्ति' रूप ऐश्वर्य वाला होने से '**ईश्वर**' पदवाच्य है।

**बालप्रिया–**

**शङ्का–** '**कैवल्यं प्राप्ताः...ते हि त्रीणि बन्धनानि**'–निरीश्वर सांख्यों को भी कैवल्य प्राप्त होता है, यह एक वस्तुस्थिति है। यदि क्लेशादि से पूर्णतः शून्य को ही '**पुरुषविशेष ईश्वर**' कहा जाय तो कैवल्य को प्राप्त हुए मुक्तात्मा तथा प्रकृतिलीन आदियों को भी ईश्वर कहना पड़ेगा। क्योंकि ये भी क्लेशशून्य होते हैं। और इनसे अतिरिक्त कोई पुरुषविशेष प्रमाण की विषय नहीं बनता है। तदर्थ सांख्यसूत्र भी है–'**ईश्वरासिद्धेः**' '**मुक्तात्मनः प्रशंसोपासासिद्धस्य वा**' '**ईदृशेश्वरसिद्धिः सिद्धा**'। यही उक्त शंका का उत्स है।

**समाधान**–इसी शंकाभिप्राय से भाष्यकार ने '**कैवल्यं प्राप्ताः**' विषय को उठाते हुए त्रिविध बन्धों की चर्चा की और बन्ध की पूर्वावस्था तथा परावस्था को भी स्पष्ट किया। विषय का यह सपष्टीकरण पुरुषविशेष '**ईश्वर**' को सिद्ध करने में समर्थ है।

---

1. क ख ग थ ध – **इतरेषां,** घ च छ ज झ त न – **तेषाम्।**
2. क छ – **प्रजायते,** ख ग घ च ज झ त थ द ध न – **प्रज्ञायते।**

**'उत्तरकोटिविधानमात्रम्'**—यद्यपि मुक्तात्मा तथा प्रकृतिलीन दोनों का पूर्वकोटिक बन्ध समान है तथापि प्रकृतिलीनों का उत्तरकोटिक बन्ध भी होता है। इस आशय से भाष्यकार ने प्रकृतिलीनों के उत्तरकोटिक बन्ध का विधान (उपदेश, कथन, नियमन) किया है। यहाँ प्रकृतिलीनों के पूर्वकोटिक बन्ध का सद्भाव बतलाने में भाष्यकार का तात्पर्य नहीं है। अतः भाष्यकार ने **'मुक्तस्य पूर्वा बन्धकोटिः'** वाक्यांश द्वारा मुक्त पुरुष का ही पूर्वकोटिक बन्ध बतलाया है, प्रकृतिलीनों का नहीं—इसमें भाष्यकार की न्यूनता नहीं समझनी चाहिये।

**'सदा'** (सर्वस्मिन् काले, सर्व+दाच्, सादेशः)—यह अव्यय काल की निरवच्छिन्न धारा का द्योतक है। काल की यह निरवच्छिन्न धारा जब भूत, भविष्य, वर्तमान से सीमांकित होती है तब अवच्छिन्न (सीमित) कहलाती है। पुरुषविशेष **'ईश्वर'** कालगत इस अवच्छिन्नता से परे की वस्तु है। उसका ऐश्वर्य भी निरवच्छिन्न होकर पुरुषविशेष के **'ईश्वर'** नाम को अन्वर्थ करता है।

**'ज्ञानक्रियाशक्तिसंपत्'**—पद के द्वारा प्रतिपादित **'पुरुषविशेष'** के ऐश्वर्य के विषय में ऊहापोह के साथ पुनः विवेचन प्राप्त हो रहा है—

### तत्त्ववैशारदी

**अत्र पृच्छति—योऽसाविति। ज्ञानक्रिये हि न चिच्छक्तेरपरिणामिन्याः संभवत इति रजस्तमोरहितविशुद्धचित्तसत्त्वाश्रये वक्तव्ये। न चेश्वरस्य सदामुक्तस्याविद्याप्रभवचित्तसत्त्वसमुत्कर्षेण सह स्वस्वामिभावः संबन्धः संभवतीत्यत उक्तम्—प्रकृष्टसत्त्वोपादानादिति। नेश्वरस्य पृथग्जनस्येवाविद्यानिबन्धनश्चित्तसत्त्वेन स्वस्वामिभावः, किं तु तापत्रयपरीतान्प्रेत्यभावमहार्णवाज्जन्तूनुद्धरिष्यामि ज्ञानधर्मोपदेशेन; न च ज्ञानक्रियासामर्थ्यातिशयसंपत्तिमन्तरेण तदुपदेशः; न चेयमपहतरजस्तमोमलविशुद्धसत्त्वोपादानं विनेत्यालोच्य सत्त्वप्रकर्षमुपादत्ते भगवानपरामृष्टोऽप्यविद्यया।**

**शङ्का**—इस विषय में प्रश्न है—**'योऽसाविति।'** चिच्छक्त्यात्मक (चैतन्यस्वरूप) अपरिणामी ईश्वर में **'ज्ञान'** और **'क्रिया'** (रूप परिणाम) का होना सम्भव नहीं है क्योंकि ये दोनों (ज्ञान और क्रिया) रजोगुण एवं तमोगुण से रहित विशुद्ध चित्तसत्त्व के आश्रित कहे जाते हैं। अर्थात् ज्ञानशक्ति और क्रियाशक्ति चित्तसत्त्व का 'धर्म' है और अविद्या के कारण प्रादुर्भूत चित्तसत्त्व के साथ नित्यमुक्त ईश्वर का **स्वस्वामिभावसम्बन्ध** नहीं हो सकता है अर्थात् नित्यमुक्त ईश्वर में अविद्या का सद्भाव नहीं है, जब कि चित्तसत्त्व के प्रादुर्भाव में अविद्या निमित्त है। अतः अविद्यारूप निमित्त के न रहने से विभिन्नजातीय दो तत्त्वों का स्वस्वामिभावसम्बन्ध कथमपि सम्भव नहीं हो सकता है। अतः ईश्वर में **'ज्ञानशक्ति'** और **'क्रियाशक्ति'** की मान्यता दोषावह है।

**समाधान**–उक्त शंका के समाधान के लिये (भाष्यकार द्वारा) कहा गया है– **'प्रकृष्टसत्त्वोपादानादिति'** सामान्यजन की भाँति ईश्वर का चित्तसत्त्व के साथ **स्वस्वामिभावसम्बन्ध** 'अविद्यानिमित्तक' नहीं है। अपितु 'मृत्युस्वरूप महार्णव (विस्तृत संसार) से ज्ञानधर्म के उपदेश द्वारा, त्रिविध तापानुभूत प्राणी का उद्धार करुंगा'–ऐसा विचार करके अविद्या से अपरामृष्ट होता हुआ भी भगवान् प्रकृष्ट चित्तसत्त्व का ग्रहण करता है और इस प्रकार से दोनों का सम्बन्ध निष्पन्न होता है। किञ्च ज्ञानक्रिया की सामर्थ्यातिशयरूप सम्पत्ति (शक्ति) से युक्त हुए विना ईश्वर ऐसा उपदेश नहीं कर सकता है और ज्ञानक्रिया की यह अतिशय सम्पत्ति रजोगुण एवं तमोगुण से रहित विशुद्ध सत्त्वगुणप्रधान चित्तसत्त्व को ग्रहण किये विना प्राप्त नहीं हो सकती है। इस प्रकार ईश्वर द्वारा प्रकृष्टसत्त्वप्रधान चित्त का ग्रहण किया जाना उपपन्न हो जाता है।

उक्त सम्बन्ध में आविद्यिक स्थिति मान लेने पर भी विषय का परिष्कार तत्त्ववैशारदीकार करते हैं–

### तत्त्ववैशारदी

**[1]अविद्याभिमानी [2]चा[3]विद्यायास्तत्त्वमविद्वान्भवति, न पुनरविद्यां[4]ह्य विद्यात्वेन सेवमानः। न खलु शैलूषो रामत्वमारोप्य तास्ताश्चेष्टां दर्शयन्भ्रान्तो भवति। तदिदमाहार्यमस्य रूपं न तात्त्विकमिति।**

अविद्या की तात्त्विकता को न समझने वाला ही **'अविद्याभिमानी'** (भ्रान्त) कहलाता है। अविद्या को अविद्यात्वेन ग्रहण (सेवन) करने वाला व्यक्ति **'अविद्याभिमानी'** अर्थात भ्रान्त नहीं समझा जाता है। उदाहरणार्थ अपने में रामत्व का आरोप करके (राम न होते हुए भी अपने को राम समझकर) राम की तत्तत् क्रियाओं को नाटकीय ढंग से प्रदर्शित करता हुआ नट भ्रान्त नहीं समझा जाता है। क्योंकि रामादि का कृत्रिम रूप (कल्पित रूप) नट का वास्तविक रूप नहीं होता हैं।

**बालप्रिया–**

**'अविद्याभिमानी'**–वाक्यांश द्वारा इस ओर इंगित किया गया है कि अविद्या से अपरामृष्ट ईश्वर अविद्यात्वेन अविद्या का सेवन करता हुआ अविद्याभिमानी अर्थात् भ्रान्त नहीं समझा जाता है। इससे ईश्वर का नित्यज्ञानत्व भी बाधित नहीं होता है।

---

1. क ख ग घ च ज झ त थ द ध न – **अविद्याभिमानी**, छ – **विद्याभिमानी**।
2. क ग थ द ध – **इव**, ख घ च छ ज झ त न – **च**।
3. क ख ग – **अविद्यया स विद्वान्**, घ च छ ज झ त थ द ध न – **अविद्यायास्तत्त्वमविद्वान्**।
4. थ ध – **हि** उपलभ्यते, क ख ग घ च छ ज झ त द न – **हि** नोपलभ्यते।

**न खलु शैलूषः**'–वाक्यांश द्वारा विशुद्ध चित्तसत्त्वनिष्ठ ज्ञानक्रियाशक्ति का अपने में आरोप करते हुए ईश्वर में प्राण्युद्धारेच्छा की मान्यता भी उपपन्न हो जाती है। शब्दान्तर में ईश्वर तथा विशुद्ध चित्तसत्त्व का सम्बन्ध आहार्यज्ञानपूर्वक है। अतः ईश्वर ज्ञानपूर्वक विशुद्ध चित्तसत्त्व द्वारा अनेक प्रकार की लीला करने पर भी भ्रान्त नहीं, अपितु तात्त्विक ज्ञान वाला ही रहता है।

सम्प्रति, ईश्वरेच्छा और चित्तसत्त्व के पारस्परिक संबन्ध को लेकर सम्भावित दोष की उद्भावना कर उसका खण्डन किया जा रहा है–

## तत्त्ववैशारदी

**स्यादेतत्–उद्दिधीर्षया भगवता सत्त्वमुपादेयं तदुपादानेन च तदुद्दिधीर्षा,** अस्या अपि **प्राकृतत्वात्। तथा चान्योन्यसंश्रय इत्यत उक्तम्–शाश्वतिक इति। भवेदेतदेवं**[1]**यदीदं प्रथमता सर्गस्य भवेत्। अनादौ तु सर्गसंहारप्रबन्धे** [2]**सर्गान्तरसमुत्पन्नसंजिहीर्षावधिसमये पूर्णे मया सत्त्वप्रकर्ष उपादेय इति प्रणिधानं कृत्वा भगवाञ्जगत्संजहार। तदा चेश्वर**[3]**चित्तसत्त्वं** [4]**प्रणिधानवासितं प्रधानसाम्यमुपगतमपि परिपूर्णे महाप्रलयावधौ** प्रणिधानवासनावशात्त-**थैवेश्वर**[5]**चित्तं सत्त्वभावेन परिणमते। यथा चैत्रः श्वः** प्रातरेवोत्थातव्यं मयेति प्रणिधाय **सुप्तस्तदैवोत्तिष्ठते** प्रणिधानसंस्कारात्। **तस्मादनादित्वादीश्वरप्रणिधानसत्त्वोपादानयोः शाश्वतिकत्वेन ना**[6]**न्योन्यसंश्रयः।**

**शङ्का**–उद्धार करने की इच्छा से ईश्वर द्वारा विशुद्ध चित्तसत्त्व का उपादान और चित्तसत्त्व के ग्रहण से ईश्वर में उद्धारेच्छा, क्योंकि ईश्वरनिष्ठ इच्छा भी चित्तसत्त्व (प्रकृति) का धर्म है–इस प्रकार अन्योन्याश्रयदोष उपस्थित होता है। शब्दान्तर में जीवों का उद्धार करने की इच्छा हो तो ईश्वर विशुद्ध चित्तसत्त्वरूप उपाधि को धारण करे और दूसरी ओर ईश्वर चित्तरूप उपाधि को धारण करे तो जीवों का उद्धार करने की इच्छा हो'–इस प्रकार अन्योन्याश्रयदोष की सम्भावना है।

**समाधान**–उक्त 'अन्योन्याश्रयदोष के उन्मूलीकरण के लिये भाष्यकार द्वारा कहा गया है–'**शाश्वतिक इति।**' यह अन्योन्याश्रयदोष तभी आ सकता है यदि यह प्रथम सृष्टि होती, किन्तु ऐसा तो है नहीं। (बीजांकुरन्याय के समान) जन्म-मरण-व्यवस्था

---

1. क ख ग क घ च छ ज झ त थ न – **यदीदं,** द ध – **यदीयम्।**
2. क ख ग घ च ज थ द ध न – **सर्गान्तर०,** झ त – **सर्गान्तरात्।**
3. क ख ग घ च छ थ द ध न – **चित्त०** उपलभ्यते, ज झ त – **चित्त०** नोपलभ्यते।
4. क ख ग घ च छ ज झ त थ द ध – **प्रणिधानवासितं प्रधानसाम्यमुपगतमपि परिपूर्णे महाप्रलयावधौ** उपलभ्यते, न – **प्रणिधान.....वधौ** नोपलभ्यते।
5. क छ – **चित्तम्,** ख ग घ च झ त थ द ध न – **चित्त०।**
6. क ग – **अन्योन्याश्रयं,** ख – **अन्योन्याश्रयः,** घ च छ ज झ त थ द ध न – **अन्योन्यसंश्रयः।**

अथवा सृष्टि-संहार-श्रृंखला के अनादि होने से ईश्वर–किसी सृष्टि के समाप्ति-काल में जब संहार करने की इच्छा होती है, तब अपने चित्तसत्त्व के विषय में 'जब प्रलय की अवधि समाप्त होगी, तब मैं सत्त्वप्रकर्ष चित्त को पुनः धारण करूँगा'– ऐसा चिन्तन करके जगत् का संहार करता है। उस समय ईश्वर के इस प्रणिधान (चिन्तन) की वासना से वासित प्रकृष्टसत्त्वप्रधान चित्त–प्रधान में लयता को प्राप्त (प्रधान में एकीभूत) होकर भी प्रलय की अवधि समाप्त होने पर ईश्वर द्वारा कृत चिन्तन की वासना के वशीभूत होकर–तादृश विशुद्ध चित्तसत्त्व के रूप में परिणत (आविर्भूत) होता है। विशुद्ध चित्तसत्त्व के लयपूर्वक होने वाले पुनरुद्भव को लौकिक दृष्टान्त द्वारा तत्त्ववैशारदीकार स्पष्ट करते हैं–जैसे लौकिक जगत् में 'कल मैं प्रातः ही उठूँगा'–ऐसा चिन्तन करके सोया हुआ चैत्र–पूर्व संस्कारवशात्–उसी समय प्रातः उठ जाता है। इस प्रकार संसारचक्र के अनादि (शाश्वतिक) होने से ईश्वर-प्रणिधान तथा सत्त्वोपादान (विशुद्धसत्त्व के ग्रहण) में चिरन्तनत्व होने के कारण (दोनों में शाश्वतिक अनादिसम्बन्ध होने के कारण) अन्योन्याश्रयदोष नहीं आता है।

**बालप्रिया–**

**'नान्योन्यसंश्रयः'**–जैसे पूर्व-पूर्व बीज उत्तरोत्तर अंकुर का और पूर्व-पूर्व अंकुर उत्तरोत्तर बीज का 'हेतु' होने पर भी; व्यक्तिरूप से परस्पर कार्यकारणभाव न होने से, इनमें अम्योन्याश्रयदोष नहीं है। वैसे ही पूर्व-पूर्व की ईश्वरेच्छा और उत्तरोत्तर के विशुद्ध चित्तसत्त्व का ग्रहण करने में व्यक्तिरूप से परस्पर कार्यकारणभाव न होने से इनके सम्बन्ध में अन्योन्याश्रयदोष नहीं है।

अन्योन्याश्रय दोष से बचने के लिये सिद्धान्ती ने जो द्रविड़ प्राणायाम किया है, उसकी अपेक्षा यह मानने में लाघव है कि 'ईश्वर के प्रकृष्ट चित्तसत्त्व का लय ही न माना जाय'? इस प्रकार पूर्वपक्षी द्वारा प्रस्तावित विशुद्ध 'चित्तसत्त्व' का लय न मानने में दोष की उद्‌भावना करते हुए तत्त्ववैशारदीकार समाधान पक्ष प्रस्तुत करते हैं–

### तत्त्ववैशारदी

**न चेश्वरस्य चित्तसत्त्वं महाप्रलयेऽपि [1]न प्रकृतिसाम्यमुपैतीति वाच्यम्। यस्य हि न कदाचिदपि प्रधानसाम्यं न तत्प्राधानिकं नापि चितिशक्तिरज्ञत्वादित्यर्थान्तरमप्रामाणिकमापद्येत। तच्चायुक्तम्, प्रकृतिपुरुषव्यतिरेकेणार्थान्तराभावात्।**

1. क ख ग घ च छ ज झ त न – **न प्रकृतिसाम्यं**, थ द ध – **प्रकृतिसाम्यं न।**

**शङ्का**–( **'प्रधानसाम्यमुपगतमपि'** के आधार पर)–महाप्रलय की अवस्था में भी ईश्वर का चित्तसत्त्व प्रकृति में तिरोभाव को प्राप्त नहीं होता है अर्थात् जिस प्रकार समस्त भूतादि तत्त्व महाप्रलय में अपने-अपने कारण में लय को प्राप्त होते हैं, उसी प्रकार ईश्वर का चित्तसत्त्व भी महाप्रलय में मूलकारणभूता प्रकृति में लीन हो जाता है–ऐसा नहीं समझना चाहिये। अन्य तत्त्वों से ईश्वर के उपाधिभूत चित्तसत्त्व का यही वैशिष्ट्य है।

**समाधान**–पूर्वपक्षी का उक्त कथन अनुचित है। क्योंकि जिसका कभी भी प्रधान में लय नहीं होता है, वह कथमपि प्राधानिक (प्रकृति का विकार) नहीं हो सकता है। और न ही विशुद्ध चित्तसत्त्व चितिशक्ति रूप है, अर्थात् इसे चेतन भी नहीं मान सकते हैं, क्योंकि यह अज्ञ (जड़) है जब कि चितिशक्ति चैतन्यत्मिका अर्थात् ज्ञानस्वरूपा है। इस प्रकार **'विशुद्धसत्त्व'** को अप्रामाणिक अर्थान्तर' मानना पड़ेगा। किन्तु यह समाधान युक्तिसंगत नहीं है, क्योंकि प्रकृति और पुरुष से अतिरिक्त (सांख्ययोगसम्मत) 'अर्थान्तर' है ही नहीं। अतः यह सिद्धान्त परिपुष्ट होता है कि प्रकृष्ट सत्त्वप्रधान चित्तसत्त्व प्राधानिक (प्रकृति का कार्य) है, जिसका महाप्रलय में अपने मूलकारणभूता प्रकृति में लय होता है।

विशुद्ध प्रकृष्टसत्त्व की प्रकृति में अन्तर्हितता सिद्धान्तित हो जाने पर पूर्वपक्षी कों विशुद्ध प्रकृष्टसत्त्व से युक्त ईश्वर के सामर्थ्य के विषय में सन्देह होता है। सम्प्रति, उसी सन्देह का उपस्थापन एवं समाधान किया जा रहा है–

### तत्त्ववैशारदी

**सोऽयमीदृश ईश्वरस्य शाश्वतिक उत्कर्षः स[1] किं सनिमित्तः सप्रमाणकः, आहोस्विन्निर्निमित्तो निष्प्रमाणक इति? उत्तरम्–तस्य शास्त्रं निमित्तम् इति। श्रुतिस्मृतीतिहासपुराणानि शास्त्रम्। चोदयति–शास्त्रं पुनः किंनिमित्तमिति। प्रत्यक्षानुमानपूर्वं हि शास्त्रम्, न चेश्वरस्य सत्त्वप्रकर्षे कस्यचित्प्रत्यक्षमनुमानं वास्ति। न चेश्वरप्रत्यक्षप्रभवं शास्त्रमिति युक्तम्। कल्पयित्वापि ह्ययं [2]स्वयं ब्रूयादात्मैश्वर्यप्रकाशनायेति भावः। परिहरति–प्रकृष्टसत्त्वनिमित्तमिति। अयमभिसंधिः–मन्त्रायुर्वेदेषु तावदीश्वरप्रणीतेषु प्रवृत्तिसामर्थ्यादर्थाव्यभिचारविनिश्चयात्प्रामाण्यं सिद्धम्। न चौषधिभेदानां तत्संयोगविशेषाणां च मन्त्राणां च तत्तद्वर्णावापोद्धारेण सहस्रेणापि पुरुषायुषैर्लौकिकप्रमाणव्यवहारी शक्तः कर्तुमन्वयव्यतिरेकौ।**

**शङ्का**–इस प्रकार (प्रकृष्ट विशुद्धसत्त्व को ग्रहण करने वाले) ईश्वर का यह जो

---

1. क ख ग घ च छ ज झ त न – **सः** उपलब्यते, थ द ध – **सः** नोपलभ्यते।
2. थ द ध – **स्वयं॰** उपलभ्यते, क ख ग घ च छ ज झ त न – **स्वयं** नोपलभ्यते।

सार्वकालिक (शाश्वतिक) सर्वज्ञत्वादि ऐश्वर्य (उत्कर्ष) है, वह सप्रमाण (सनिमित्त) है अथवा प्रमाणरहित (निर्निमित्त) है? (पूर्वपक्षी की दृष्टि में प्राधानिक उपाधियुक्त ईश्वर में उत्कर्ष हो ही नहीं सकता है)।

**समाधान**–इसका उत्तर (देते हुए भाष्यकार ने कहा) है–**'तस्य शास्त्रं निमित्तमिति।'** ईश्वर के सार्वकालिक उत्कर्ष में श्रुति, स्मृति, इतिहास तथा पुराणादि शास्त्र प्रमाणस्वरूप हैं।

**शङ्का**–(भाष्यकार द्वारा पूर्वपक्षी की ओर से) पुनः प्रश्न है–**'शास्त्रं पुनः किं निमित्तमिति।'** तो फिर (ईश्वरोत्कर्ष के प्रतिपादक) श्रुति, स्मृति आदि शास्त्र में ही क्या प्रमाण है। अर्थात् शास्त्र की प्रामाणिकता कैसे सिद्ध होती है? शास्त्र का लक्षण प्रस्तुत करते हुए तत्त्ववैशारदीकार कहते हैं–क्योंकि शास्त्र प्रत्यक्षानुमानपूर्वक होता है अर्थात् प्रत्यक्ष अथवा अनुमान से अनुभव किये हुए पदार्थ का प्रतिपादक जो वाक्यविशेष होता है, उसे ही शास्त्र कहते हैं और ईश्वर का सत्त्वप्रकर्ष अर्थात् उत्कर्ष किसी के प्रत्यक्ष अथवा अनुमान का विषय नहीं होता है अर्थात् ईश्वर का सार्वकालिक उत्कर्ष किसी को प्रत्यक्ष अथवा अनुमित नहीं होता है। शास्त्र की प्रामाणिकता के लिये यदि कहा जाय कि ईश्वर के प्रत्यक्ष (ईश्वरीय अनुभव) का विषयभूत यह शास्त्र है, तो यह भी तर्कसंगत नहीं है, क्योंकि ऐसा मान लेने पर यह प्रश्नार्ह होगा कि ईश्वर ने क्या आत्मैश्वर्य (स्वोत्कर्ष) के प्रकाशन के लिये शास्त्र बनाया?

**समाधान**–भाष्यकार शंका का निराकरण करते हैं–**'प्रकृष्टसत्त्वनिमित्तमिति।'** शुद्धसत्त्वरूप ईश्वरोपाधि शास्त्र में प्रमाण है। अभिप्राय यह है–ईश्वरनिर्मित (तत्तत्कार्य साधक) मन्त्र तथा (तत्तद्रोगनिवर्त्त्यर्थ औषधिप्रतिपादक) आयुर्वेद की प्रामाणिकता=(विश्वसनीयता) निर्णीत है, क्योंकि प्रवृत्ति कराने में सफल होने से इनके अर्थ की अनतिक्रमणीयता=अनुल्लंघनीयता सुस्थिर है। अर्थात् जिस-जिस कार्य की सिद्धि के लिये जिस-जिस मन्त्र और जिस-जिस रोगनिवृत्ति के लिये जिस-जिस औषधि का प्रतिपादन किया गया है, वे अपनी-अपनी फलोत्पत्ति अर्थात् प्रयोजनसिद्धि में सर्वथा एवं सर्वदा समर्थ हैं, न कि असमर्थ। अतः सत्यार्थप्रतिपादक वेदभाग के प्रामाण्य में सन्देहावकाश नहीं है।

वेदशास्त्र को अप्रमाणिक मानकर तत्प्रतिपाद्य **'ईश्वर'** तत्त्व का अप्रामाण्य और अप्रमाणिक ईश्वर द्वारा निर्मित वेदशास्त्र का अप्रामाण्य–**इत्थंविधया** अप्रामाण्योभय की शंका निर्मूल है। इसी तथ्य को वाचस्पति मिश्र उक्त दृष्टान्त द्वारा वेदादि शास्त्र को पुरुष-निर्मिति मानने की असम्भाव्यता के रूप से परिपुष्ट करते हैं–सहस्र वर्षों में भी लौकिक प्रमाण का व्यवहार करने वाला व्यक्ति तत्तद् द्रव्यविशेषों के संयोग

से निर्मित भिन्न-भिन्न औषधियों का और तत्तद् वर्णों के आवाप (ग्रहण) तथा उद्वाप (त्याग) से अनुबन्धित मन्त्रों का (प्रयोग काल में) अन्वयव्यतिरेक नहीं कर सकता है अर्थात स्वेच्छानुसार शास्त्रविहित मन्त्र अथवा औषधि के स्वरूप को भिन्न वर्ण और भिन्न द्रव्य द्वारा परिवर्तित नहीं कर सकता है फिर जिसमें निर्मित वस्तु के स्वरूप में परिवर्तन करने की ही क्षमता नहीं है, तो वह सीमित सामर्थ्यवाला पुरुष प्रामाणिक वेद का निर्माता कैसे हो सकता है अर्थात् कथमपि नहीं हो सकता है। यह शास्त्रीय अद्भुतता **प्रकृष्टशुद्धसत्त्वोपाधिविशिष्ट** ईश्वर में ही निहित है।

**बालप्रिया–**

**'कल्पयित्वाऽपि'**–शास्त्र को ईश्वरप्रत्यक्षमूलक मानना ठीक नहीं है। क्योंकि आप्तवचन कहकर शास्त्र का निर्वाह नहीं किया जा सकता है। किञ्च शास्त्र का आप्तत्व आज तक सिद्ध नहीं हो सका है। तन्त्रवार्तिक में कहा भी गया है–

**न चाऽनुवदितुं शक्यः पूर्वमन्यैरबोधितः।**
**अनादेरागमस्याऽर्थो न च सर्वज्ञ आदिमान्॥**
**कृत्रिमेण त्वसत्येन स कथं प्रतिपाद्यते।**
**अथ तद्वचनेनैव सर्वज्ञोऽन्यैः प्रतीयते॥**
**प्रकल्पयेत् कथं सिद्धिरन्योन्याश्रययोस्तयोः।**

अर्थात् 'किसी के द्वारा पहले ज्ञात न होने के कारण वेद का अनुवाद करना सम्भव नहीं है और अनादि आगम का सर्वज्ञ विषय सादि नहीं हो सकता है। स्वकल्पित कर्त्ता के असत्यरूप होने से वह प्रामाणिक शास्त्र का प्रतिपादन कैसे कर सकता है। यदि आगमवचन से वेदकर्त्ता का सर्वज्ञत्व मनुष्यों द्वारा जाना जाता है–ऐसा कहें तो अन्योन्याश्रित आगम और ईश्वर की सिद्धि कैसे हो सकती है? अर्थात् सिद्धि नहीं हो सकती है।'

**'मन्त्रायुर्वेदेषु'**–भगवान् अक्षपाद ने **तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः** २/१/५४ द्वारा वेद के अप्रामाण्य पर शंका की है और **'न कर्तृकर्मसाधनत्रैगुण्यात्'** द्वारा शंका का समाधान किया है। अन्त में **'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रमाणत्वात्'** सूत्र द्वारा वेद का प्रामाण्य प्रतिपादित किया है। इसी तथ्य को ध्यान में रखकर वाचस्पति मिश्र ने भी विषय को उपस्थित किया है।

### तत्त्ववैशारदी

**न चागमादन्वयव्यतिरेकौ ताभ्यां चागमस्तत्संतानयोरनादित्वादिति प्रतिपादयितुं युक्तम्, महाप्रलये तत्[1] संतानयोर्विच्छेदात्। न च तद्भावे प्रमाणाभावः। अभिन्नं प्रधानविकारो**

1. क ख ग घ च छ ज झ त द न – **सन्तानयोः**, थ ध – **सत्त्वादनयोः**।

[1]**जगदिति हि प्रतिपादयिष्यते। सदृशपरिणामस्य च**[2] **विसदृशपरिणामता दृष्टा। यथा क्षीरेक्षुरसादेर्दधिगुडादि**[3]**रूपा। विसदृशपरिणामस्य पूर्वं सदृशपरिणामता च दृष्टा। तदिह प्रधानेनापि महदहङ्कारादिरूपविसदृशपरिणामेन सता भाव्यं कदाचित्सदृशपरिणामेनापि। सदृशपरिणामश्चास्य साम्यावस्था। स च महाप्रलयः। तस्मान्मन्त्रायुर्वेदप्रणयनात्तावद्भगवतो विगलितरजस्तमोमलावरणतया परितः प्रद्योतमानं** [4]**बुद्धिसत्त्वमास्थेयम्। तथा चाभ्युदयनिःश्रेयसोपदेशपरोऽपि वेदराशिरीश्वरप्रणीतस्तद्** [5]**बुद्धिसत्त्वप्रकर्षादेव भवितुमर्हति। न च सत्त्वोत्कर्षे रजस्तमःप्रभवौ विभ्रमविप्रलम्भौ संभवतः। तत्सिद्धं प्रकृष्टसत्त्वनिमित्तं शास्त्रमिति।**

**शङ्का**—आगम से अन्वय-व्यतिरेक और अन्वय-व्यतिरेक से आगम का प्रामाण्य होता है, क्योंकि अन्वय-व्यतिरेक के सन्तान (प्रवाह) को अनादि माना गया है?

**समाधान**—ऐसा प्रतिपादित करना तर्कसंगत नहीं है, क्योंकि महाप्रलय की अवस्था में आगम की सत्ता होने से अन्वय-व्यतिरेक रूप सन्तान का उच्छेद हो जाता है और आगम की सत्ता मानने में कोई प्रमाणाभाव नहीं है। प्रधान का विकारभूत जगत् प्रधान से अभिन्न है—ऐसा आगे प्रतिपादित किया जायेगा। '**सदृशपरिणाम**' का '**विसदृशपरिणाम**' देखा जाता है। जैसे दुग्ध, इक्षुरस (गन्ना) आदि का दधि, तथा गुड़ आदि रूप से विसदृश परिणाम होता है। (सांख्ययोग के अनुसार) विसदृशपरिणाम रूप जगत् से पूर्व प्रधान की सदृशपरिणामरूपा प्रलयावस्था रहती है। इसी प्रकार महत् आदि रूप से विसदृशपरिणामभूता प्रकृति का कभी सदृशपरिणाम होता है। प्रधान के सदृशपरिणाम को '**साम्यावस्था**' कहते हैं। और यह साम्यावस्था '**महाप्रलय**' है। इस प्रकार मन्त्र और आयुर्वेद का प्रणयन करने से 'ईश्वर' का रजोगुण एवं तमोगुणरूप मलावरण से रहित सर्वतः (परितः) प्रद्योतमान् 'बुद्धिसत्त्व' (प्रकृष्ट चित्तसत्त्व) वाला होना सिद्ध होता है। क्योंकि ईश्वरनिर्मित अभ्युदय और निःश्रेयस उपदेशपरक वेदराशि भी ईश्वर के 'प्रकृष्ट बुद्धिसत्त्व' (विशुद्ध चित्तसत्त्व) से ही सम्भव हो सकती है। और ईश्वर के उपाधिभूत चित्तसत्त्व में सत्त्वाधिक्य होने के कारण उसमें रजोगुण एवं तमोगुण के कारण समुद्भूत होने वाली भ्रान्ति और छल की सम्भावना ही नहीं हैं। अतः भ्रमशून्य और आरोपरहित वेद का भी प्रामाण्य सिद्ध हो जाता है। इससे यह निर्णीत होता है कि शास्त्र के प्रामाण्य में '**प्रकृष्टसत्त्व**' प्रमाण है।

---

1. क ख ग घ च छ झ त न – **जगदिति हि**, थ द ध – **हि जगदिति**।
2. क ख ग घ च छ ज झ त न – **च** उपलभ्यते, थ द ध – **च** नोपलभ्यते।
3. क ग थ द ध – **रूपं**, ख घ च छ ज झ त न – **रूपा**।
4. क ख ग घ च छ ज झ त ध द ध – **बुद्धिसत्त्वमास्थेयम्। तथा चाभ्युदयनिःश्रेयसोपदेशपरोऽपि वेदराशिरीश्वरप्रणीतस्तत्** उपलभ्यते, न – **बुद्धिसत्त्व....तत्** नोपलभ्यते।
5. क छ – **बुद्धिचित्तसत्त्व०**, ख ग घ च ज झ त थ द ध न – **बुद्धिसत्त्व०**।

सम्प्रति, पूर्वपक्षी शास्त्र के 'आगमत्व' पर सन्देह करता है–

तत्त्ववैशारदी

**स्यादेतत्–प्रकर्षकार्यतया प्रकर्षं बोधयच्छास्त्रं शेषवदनुमानं भवेन्न त्वागम इत्यत आह–एतयोरिति। न कार्यत्वेन बोधयत्यपि त्वनादिवाच्यवाचकभावसंबन्धेन बोधयतीत्यर्थः। ईश्वरस्य हि बुद्धिसत्त्वे प्रकर्षो वर्तते, शास्त्रमपि तद्वाचकत्वेन तत्र वर्तत इति। उपसंहरति–**[1]**एतस्मादिति। एतस्माद् ईश्वरबुद्धिसत्त्वप्रकर्षवाचकाच्छास्त्राद् एतद् भवति ज्ञायते, विषयेण विषयिणो लक्षणात् सदैवेश्वरः सदैव मुक्त इति। तदेवं पुरुषान्तराद्व्यवच्छिद्येश्वरान्तरादपि व्यवच्छिनत्ति–तच्च तस्येति। अतिशयविनिर्मुक्तिमाह–न तावदिति। कुतः–यदेवेति। कस्मात्सर्वातिशयविनिर्मुक्तं तदैश्वर्यमित्यत आह–तस्माद्यत्रेति। अतिशयनिष्ठामप्राप्तानामौपचारिकमैश्वर्यमित्यर्थः।**

**शङ्का**–ईश्वर के उपाधिभूत प्रकृष्टसत्त्व का कार्य होने से ईश्वर के (सार्वकालिक) उत्कर्ष का ख्यापन करने वाला शास्त्र (वेद) 'शेषवत्' अनुमानगम्य माना जाय, न कि आगमगम्य।

**समाधान**–इस पर भाष्यकार कहते हैं–'**एतयोरिति**।' प्रकृष्टसत्त्व के कार्य रूप से '**शास्त्र**' (वेद) का बोध नहीं होता है, अपितु (ईश्वर और शास्त्र में निहित) अनादि वाच्यवाचकभावसम्बन्ध के रूप से '**शास्त्र**' का बोध होता है। ईश्वर के उपाधिभूत बुद्धिसत्त्व में प्रकर्ष (सर्वोपरिता अथवा शक्ति) अन्तर्हित हैं और शास्त्र भी प्रकर्ष का वाचक होने से बुद्धिसत्त्व में रहता है। इस प्रकार ईश्वरोपाधिरूप शुद्धसत्त्व में विद्यमान शास्त्र और ईश्वरोत्कर्ष का अनादिसम्बन्ध है। इसमें शास्त्र '**वाचक**' है तथा प्रकृष्टसत्त्वप्रधान ईश्वर '**वाच्य**' है। शब्दान्तर में समवायसम्बन्ध से ईश्वर- चित्त में वर्तमान शास्त्र और उत्कर्ष (ईश्वरोत्कर्ष) में निमित्तनैमित्तिकभावरूप '**अनादिसम्बन्ध**' है। ईश्वरोत्कर्ष और शास्त्र के तथाकथित सम्बन्ध को बतलाकर भाष्यकार उपसंहार करते हैं–'**एतस्मादिति**।' ईश्वरनिष्ठ बुद्धिसत्त्व के प्रकर्ष का वाचक (बोधक) '**शास्त्र**' है, इससे यह जाना जाता है कि 'ईश्वर सदा ही ऐश्वर्यशाली है और सदा ही मुक्त है', क्योंकि विषय के द्वारा विषयी का लक्षण किया जाता है। इस प्रकार मुक्तपुरुषादि से ईश्वर को विलक्षण सिद्ध कर भाष्यकार ऐश्वर्यशाली योगियों की अपेक्षा भी ईश्वर को भिन्न सिद्ध करते हैं–'**तच्च तस्येति**।' ईश्वर का यह ऐश्वर्य समता (बराबरी) और अतिशय (न्यूनाधिक) से रहित है। तात्पर्य यह है कि अणिमादि ऐश्वर्यसम्पन्न योगियों के ऐश्वर्य में समानता तथा

1. **थ द ध – एतस्मादिति** उपलभ्यते, **क ख ग घ च छ ज झ त न – एतस्मादिति** नोपलभ्यते।

**विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै इत्यादिश्रुतिभ्य इति भावः। न च प्रकृतिस्वातन्त्र्यक्षतिः, निमित्तमप्रयोजकं प्रकृतीनाम् इत्यागामिसूत्रात् निमित्तकारणस्येश्वरादेस्तत्स्वातन्त्र्याविघातकत्वात्। एतदेव व्याचष्टे–**[1]**पूर्वे हीति। अवच्छेदशब्दार्थेनावच्छेदप्रयोजनेन कालो नोपावर्तते न संबध्यते। तात्पर्यार्थमाह–यथाऽस्येति। अस्य वर्त्तमानस्य सर्गस्यादौ **[2]**पूर्वं प्रकर्षगत्या ज्ञानोत्कर्षप्राप्त्या स्वतःसिद्ध इत्यर्थः। अत्रेश्वरस्य सर्वजीवपितृत्ववचनात् श्रुत्युक्ताग्निविस्फुलिङ्गदृष्टान्तानुसारेण च जीवब्रह्मणोरंशांशिभावस्तयोरभेदश्च पितापुत्रवदेवेति भावः। तथा च स्मृतिः–**

यथा दीपसहस्राणि दीप एकः प्रसूयते ।
तथा जीवसहस्राणि स एवैकः प्रसूयते ॥
सलिले करकाऽश्मेव दीपोऽग्नाविव तन्मयः ।
जीवो मौढ्यात् पृथग् बुद्धो युक्तो ब्रह्मणि लीयते ॥

**इत्यादिः। अयं चाभेदो नाखण्डता, अपि त्वविभाग एव, अविभागो वचनात् इति वेदान्तसूत्रेण जीवानां ब्रह्मण्यविभागलक्षणाभेदस्यैव वचनात्। अविभागश्च दुग्धं जलमभूदित्यादिप्रत्ययनियामकः स्वरूपसम्बन्धः आधारताऽऽदिवत् किं वा लक्षणानन्यत्वमिति। अनेन पितृत्वान्तर्यामित्वरूपेण गुरुत्वेन जीवानामप्यात्मेश्वर इति वेदान्तमहावाक्यार्थोऽपि सूचितः। यो हि यस्यांशी अधिष्ठाता वा भवति स तस्यात्मेति दृष्टम्। यथा सूर्यश्चक्षुषः, यथा वा जीवो देहस्येति दिक्॥२६॥**

सूत्रकार परमेश्वर की अन्य विशेषता का प्रतिपादन करते हैं–'**स इति**' 'ईश्वर **पूर्वेषाम्**' अर्थात् पूर्व-पूर्व सर्गादियों में उत्पन्न ब्रह्मा, विष्णु तथा महेश्वरादियों का भी '**गुरु**' अर्थात् अन्तर्यामी पिता है और विद्या से ज्ञानचक्षु को प्रदान करता है।

**शङ्का**–कैसे? (ईश्वर पूर्ववर्त्ती ब्रह्मादियों का 'गुरु' किस प्रकार हो सकता है)?

**समाधान**–क्योंकि ईश्वर काल से सीमित नहीं है अर्थात् सीमातीत (अनवच्छिन्न) है। द्विपरार्द्धादि काल से सीमित ब्रह्मादि, अपरिच्छिन्न '**गुरु**' के विना सम्भावित स्थिति वाले नहीं हो सकते हैं। जैसा कि '**यो ब्रह्माणं...तस्मै**' अर्थात् 'जो सृष्टि के आरम्भ में ब्रह्मा को उत्पन्न करता है और जो उसके लिये वेदों को प्रवृत्त करता है'–इस श्रुति का भी यही तात्पर्य है। इससे 'प्रकृति' के स्वातन्त्र्य का सिद्धान्त व्याहत नहीं होता है, क्योंकि '**निमित्तमप्रयोजकं प्रकृतीनाम्**' ४/३ इस आगामी योगसूत्र के द्वारा निमित्तकारणीभूत ईश्वरादि को प्रकृति के स्वातन्त्र्य (उपादानकारणत्व) का नाशक नहीं बतलाया गया है अर्थात् निमित्तकारणत्वेन ईश्वर सृष्टि के प्रति

---

1. क – **पूर्वं**, ख ग घ च छ – **पूर्वे**।
2. क – **पूर्वे**, ख घ च छ – **पूर्वं**, ग – **पूर्व०**।

उपादानकारणीभूता प्रकृति के सिद्धान्त को क्षतविक्षत नहीं करता है। सूत्र के इसी अभिप्राय को भाष्यकार स्पष्ट करते हैं–**'पूर्वे हीति।'** अवच्छिन्नता की दृष्टि से जो काल से सम्बन्धित नहीं होता है, ऐसा निरवच्छिन्न ईश्वर पूर्वकालिक ब्रह्मादियों का **'गुरु'** है। इसी तात्पर्य को बतलाते हुए भाष्यकार कहते हैं–**'यथाऽस्येति।'** ज्ञानोत्कर्षयुक्त होने के कारण ईश्वर वर्तमान सर्ग के पूर्व भी **'स्वतः सिद्ध'** रहा है अर्थात् कालातीत ईश्वर का **'निरतिशय ज्ञान'** स्वतः प्रमाणित है। प्रकृत में **'ईश्वर'** को समस्त जीवों का **'पिता'** कहने से और श्रुतियों में आये अग्नि-विस्फुलिङ्ग के दृष्टान्त से जीव-ब्रह्म का **'अंशांशिभावसम्बन्ध'** पिता-पुत्र-सम्बन्ध की भाँति उनके **'अभेद'** को ही सिद्ध करता है। इसी तथ्य की प्रतिपादिका स्मृति भी है–**'यथा दीपसहस्राणि...ब्रह्मणि लीयते'** अर्थात् 'जिस प्रकार एक दीप सहस्र प्रदीपों को प्रज्वलित करता है उसी प्रकार एक ईश्वर सहस्र जीवों को उत्पन्न करता है। जिस प्रकार जल में बर्फ और अग्नि में दीप (दीपशिखा) तन्मय होकर रहता है उसी प्रकार अज्ञानतावशात् ईश्वर से अपने को पृथक् समझता हुआ जीव तत्त्वज्ञान प्राप्त करके (अन्त में) ब्रह्म में लीन हो जाता है।' जीवेश्वर का यह अभेद 'अखण्डरूप' नहीं है, अपितु **'अविभागरूप'** ही है। जैसा कि **'अविभागो वचनात्'** ४/२/१६ वेदान्त सूत्र के द्वारा जीवों का ब्रह्म में **अविभागलक्षणक अभेद'** ही प्रतिपादित हुआ है। अविभागसम्बन्ध के स्वरूप को स्पष्ट करते हुए योगवार्त्तिककार कहते हैं–यह **'अविभाग'** 'जल दूध हो गया'–इत्याकारक ज्ञान का नियामक है। अर्थात् जीवेश्वर के इस **'अविभाग'** के कारण 'जीव ईश्वररूप हो गया' ऐसा व्यवहार किया जाता है। अथवा जीवेश्वर का **'अविभागलक्षणक स्वरूपसम्बन्ध'** आधारता आदि के समान भी कहा जा सकता है। अथवा जीवेश्वर में **'लक्षणानन्यत्वरूप अभेदसम्बन्ध'** है। ज्ञानरूपगुरुता के साथ-साथ पितृत्व और अन्तर्यामित्वरूप गुरुता के कारण वह जीवों का भी आत्मेश्वर (ईश्वर) है–इस कथन से वेदान्त के **'तत्त्वमसि'** वाक्य का अर्थ भी उपपन्न हो जाता है। जो जिसका **'अंशी'** अथवा अधिष्ठाता होता है, वह उस **'अंश'** अथवा अधिष्ठेय का **'आत्मा'** अर्थात् **'तद्रूप'** होता है–ऐसा देखा जाता है। जैसे सूर्य चक्षु का अथवा जीव देह का अधिष्ठाता होने से तद्रूप है॥२६॥

**बालप्रिया–**

**'स एषः'–मिश्र-भिक्षु-मतभेद**–वाचस्पति मिश्र ने 'स एषः' को प्रस्तुत सूत्र की वैयासिकी अवतरणिका माना है जब कि विज्ञानभिक्षु ने **'स एषः'**–इत्यंश को सूत्रांश बतलाया है॥२६॥

'ईश्वर' का बोधक सूत्र उपस्थित हो रहा है–

### योगसूत्रम्

## [1]तस्य वाचकः प्रणवः॥२७॥

(तथाकथित) 'ईश्वर' का अभिधायक शब्द 'प्रणव' (ओङ्कार) है॥२७॥

### व्यासभाष्यम्

**वाच्य ईश्वरः प्रणवस्य। किमस्य संकेतकृतं वाच्यवाचकत्वमथ प्रदीपप्रकाशवदवस्थितम् इति? स्थितोऽस्य वाच्यस्य वाचकेन सह सम्बन्धः। संकेतस्त्वीश्वरस्य स्थितमेवार्थमभिनयति। यथावस्थितः पित्रापुत्रयोः संबन्धः संकेतेनावद्योत्यते अयमस्य पिता, अयमस्य पुत्र इति सर्गान्तरेष्वपि वाच्यवाचकशक्त्यपेक्षस्तथैव संकेतः क्रियते। [2]संप्रतिपत्तिनित्यतया नित्यः शब्दार्थसंबन्ध इत्यागमिनः प्रतिजानते॥२७॥**

'प्रणव' (वाचक) का अभिधेय अर्थ (वाच्य) 'ईश्वर' है। क्या ईश्वर और प्रणव का वाच्यवाचकभावसम्बन्ध संकेतजन्य है अथवा दीप से प्रकाशित पदार्थ के समान पहले से ही स्थित अर्थात् संकेतद्योत्य है? (उत्तर है कि)– इस ईश्वररूप वाच्य का प्रणवरूप वाचक के साथ वाच्यवाचकभावसम्बन्ध पहले से ही विद्यमान है। (अर्थात् वह नित्य और संकेतद्योत्य है)। ईश्वर का संकेत तो पहले से ही वर्तमान पद-पदार्थ के वाच्यवाचकभावसम्बन्ध को प्रकाशित करता है (अर्थात् वह सम्बन्ध को उत्पन्न नहीं करता है)। यह उसी प्रकार है, जिस प्रकार लोक में पहले से विद्यमान पिता-पुत्र-सम्बन्ध–'यह इसका पिता है और यह उसका पुत्र है'–इस प्रकार संकेत करके प्रकाशित किया जाता है। महाप्रलय के अनन्तर आगामी दूसरे सर्गों में भी (पूर्ववत्) वाच्यवाचकभावसम्बन्ध की अपेक्षा रखते हुए ही उसी प्रकार का वाच्यवाचकभावसम्बन्ध ईश्वर के द्वारा संकेतित किया जाता है। सदृश व्यवहार परम्परा के नित्य होने से शब्दार्थसम्बन्ध भी नित्य होता है–ऐसा आगमशास्त्रकार अङ्गीकार करते हैं॥२७॥

---

1. तत् – इति पाठान्तरम्।
2. अ, क ख ग घ च छ त थ द ध न प ब भ म य र – **संप्रतिपत्तिनित्यतया नित्यः शब्दार्थसंबन्ध इत्यागमिनः प्रतिजानते** १/२७ सूत्रस्य टीका, फ – **संप्रतिपत्ति......प्रतिजानते** १/२८ सूत्रस्य अवतरणिका।
आ, क ख ग घ च ज झ त द ध न प फ ब भ म य र – **संप्रतिपत्ति०**, छ थ – **संप्रति।**

### तत्त्ववैशारदी

[1]**तदनेन प्रबन्धेन भगवानीश्वरो दर्शितः। संप्रति तत्प्रणिधानं दर्शयितुं तस्य वाचकमाह— तस्य वाचकः प्रणवः। व्याचष्टे—वाच्य** इति।

इस प्रकार उपर्युक्त विवेचन से ईश्वर का स्वरूप प्रदर्शित हुआ। अधुना, '**ईश्वर-प्रणिधान**' (ईश्वर-चिन्तन) को प्रदर्शित करने के उद्देश्य से सूत्रकार ईश्वर के '**वाचक**' ( अभिधायक) का निर्देश करते हैं—'**तस्येति**।' भाष्यकार सूत्र की व्याख्या करते हैं—'**वाच्य इति**।' अर्थात् '**प्रणव**' का 'वाच्य ईश्वर' है। इस प्रकार ईश्वर और प्रणव में वाच्यवाचकसम्बन्ध ज्ञात होता है।

**बालप्रिया—**

'**प्रणव**':—(१) कुछ विद्वान् '**एतदालम्बनं श्रेष्ठमेतदालम्बनं परम्**'—इस श्रुति के अनुसार '**प्रणव**' को ईश्वर के 'प्रतीक' रूप से मानते हैं। क्योंकि प्रतिमा में विष्णुबुद्धि के समान ब्रह्मबुद्धि से उपास्यमान '**प्रणव**' ब्रह्मज्ञान का उपाय है। (२) कुछ विद्वानों का कथन है कि योगियाज्ञवल्क्य के '**अदृष्टविग्रहो देवो भावग्राह्यो मनोमयः। तस्योङ्कारः स्मृतो नाम तेनाहूतः प्रसीदति**—इस वचन के अनुसार देवदत्तादि संज्ञा के समान '**प्रणव**' ईश्वर का '**नाम**' है।

### तत्त्ववैशारदी

तत्र परेषां मतं विमर्शद्वारेणोपन्यस्यति—किमस्येति। वाचकत्वं प्रतिपादकत्वमित्यर्थः। **परे हि पश्यन्ति—यदि स्वाभाविकः शब्दार्थयोः संबन्धः संकेतेनास्माच्छब्दादयमर्थः प्रत्येतव्य इत्येवमात्मकेनाभिव्यज्येत, ततो यत्र नास्ति स संबन्धस्तत्र संकेतशतेनापि न व्यज्येत। न हि प्रदीपव्यङ्ग्यो घटो यत्र नास्ति तत्र प्रदीपसहस्रेणापि शक्यो व्यङ्क्तुम्। कृतसंकेतस्तु करभशब्दो वारणे वारणप्रतिपादको दृष्टः। ततः संकेतकृतमेव वाचकत्वमिति विमृश्याभिमतमवधारयति— स्थितोऽस्येति। अयमभिप्रायः—सर्व एव शब्दाः सर्वाकारार्थाभिधानसमर्था इति स्थित एवैषां सर्वाकारैरर्थैः स्वाभाविकः संबन्धः। ईश्वरसंकेतस्तु प्रकाशकश्च नियामकश्च तस्य ईश्वर-संकेतासंकेतकृतश्चास्य वाचकापभ्रंशविभागः। तदिदमाह—संकेतस्त्वीश्वरस्येति। निदर्शनमाह— यथेति।**

सम्प्रति, ईश्वर और प्रणव के वाच्यवाचकसम्बन्ध को मत-मतान्तरों के साथ उपस्थित करते हुए भाष्यकार इस विषय को उठाते हैं—'**किमस्येति**।' यहाँ '**वाचकत्व**' का अर्थ है—प्रतिपादकत्व।

---

1. थ द ध — **तदनेन प्रबन्धेन भगवानीश्वरो दर्शितः** १/२७ सूत्रस्य अवतरणिका, क ख ग घ च छ ज झ त न — **तदनेन प्रबन्धेन भगवानीश्वरो दर्शितः** १/२६ सूत्रस्य टीका।

**'वाच्यवाचकभावसम्बन्ध संकेतकृतः पूर्वपक्ष**–नैयायिकों का कहना है कि शब्द तथा अर्थ का स्वाभाविक सम्बन्ध 'इस शब्द से यह अर्थ जाना जाय'–इत्याकारक संकेत के द्वारा अभिन्नरूप से अभिव्यक्त होता है, ऐसा माना जाय तो जहाँ पर शब्द और अर्थ का स्वाभाविक सम्बन्ध नहीं है, वहाँ पर सैकड़ों बार संकेत करने से भी सम्बन्धविरहित पद-पदार्थ के सम्बन्ध की अभिव्यक्ति नहीं हो पायेगी। उदाहरणार्थ जहाँ पर प्रदीप से अभिव्यक्त होने वाला घट विद्यमान नहीं है अर्थात् घटाभाव है वहाँ पर सहस्र प्रदीप-माला भी घट को अभिव्यक्त करने में समर्थ नहीं हो सकती है। किन्तु शब्दार्थसम्बन्ध को **'संकेतकृत'** मानने पर वारण (हाथी) अर्थ में कृतसंकेत **'करभ'** शब्द **'वारण'** अर्थ (अभिधेय) का वाचक (बोधक) होता है। अतः शब्द और अर्थ में **'वाच्यवाचकभावसम्बन्ध' 'संकेतजन्य'** ही है।

इस प्रकार पूर्वपक्षी की शब्दार्थसम्बन्धविषयक मान्यता को उपस्थित करके भाष्यकार योगाभिमत को दृढता के साथ प्रस्तुत करते हैं–**'स्थितोऽस्येति।'**

**वाच्यवाचकभावसम्बन्ध संकेतद्योत्यः सिद्धान्तपक्ष**–इस विषय में भाष्य का तात्पर्य यह है–सभी प्रकार के शब्द सभी प्रकार के अर्थों का अभिधान (कथन) करने में समर्थ होते हैं–इस नियम के अनुसार शब्दों (वाचकों) का सभी प्रकार के अर्थों (वाच्यों) के साथ स्वाभाविक सम्बन्ध स्थित ही है। और ईश्वरसंकेत तो शब्दार्थसम्बन्ध का प्रकाशक तथा नियामक होता है। ईश्वर द्वारा संकेतित शब्द में वाचकत्व और उससे भिन्न (ईश्वरासंकेतित) शब्द में अवाचकत्व (अपभ्रंशत्व) है–यही दोनों में अन्तर है। इसी तथ्य को भाष्यकार बतलाते हैं–**'संकेतस्त्वीश्वरस्येति।'** अर्थात् ईश्वरकृत संकेत पूर्वस्थित (वाच्यवाचकसम्बन्धरूप से स्थित) अर्थ को ही प्रकाशित करता है। शब्दार्थसम्बन्ध की पूर्व स्थिति को सिद्ध करने के लिये भाष्यकार उदाहरण प्रस्तुत करते हैं–**'यथेति।'** जिस प्रकार 'पिता-पुत्र-सम्बन्ध' पहले से स्थित रहता है, केवल 'यह इसका पिता है और यह इसका पुत्र है'–इत्याकारक संकेत के द्वारा पूर्वस्थित सम्बन्ध का प्रकाशनमात्र होता है।

**बालप्रिया–**

**'विमृश्य'**–वाच्यवाचकसम्बन्ध आगन्तुक है अथवा नित्य है–इस पर विचार करके भाष्यकार ने 'सदृशव्यवहारपरम्परा के कारण शब्दार्थसम्बन्ध नित्य है'–इस सिद्धान्त को अङ्गीकृत किया है।

**'सर्वाकारार्थाभिधानसमर्थाः'**–यह सिद्धान्त महाभाष्यकार ने भी कहा है–'**सर्वे सर्वार्थवाचकाः**'।

**'स्वाभाविकः सम्बन्धः'**–पदप्रयोग द्वारा तत्त्ववैशारदीकार ने व्यासभाष्य के अनुसार शब्दार्थसम्बन्ध को, नित्य होने से 'सकेतद्योत्य' माना है। स्वयं सूत्रकार

पतञ्जलि ने महाभाष्य में **'सिद्धे शब्दार्थसम्बन्धे'**–इस वार्तिक का व्याख्यान करते हुए शब्दार्थसम्बन्ध को नित्य माना है। अतः नित्य पदार्थ में संकेतजन्यत्व असम्भव है। महाभाष्य की पंक्तियाँ इस प्रकार हैं–**'अथ सिद्धशब्दस्य कः पदार्थः। नित्यपर्यायवाची सिद्धशब्दः। कथं ज्ञायते। यत्कूटस्थेष्वविचालिषु भावेषु वर्त्तते। तद्यथा सिद्धा द्यौः सिद्धा पृथ्वी, सिद्धमाकाशमिति।'**

शब्दार्थसम्बन्ध को **'संकेतद्योत्य'** मानने पर पूर्वपक्षी की ओर से आपत्ति की जा रही है–

## तत्त्ववैशारदी

**ननु शब्दस्य प्राधानिकस्य महाप्रलयसमये प्रधानभावमुपगतस्य शक्तिरपि प्रलीना। ततो महदादिक्रमेणोत्पन्नस्यावाचकस्यैव माहेश्वरेण संकेतेन न शक्या वाचकशक्तिरभिज्वलयितुम् विनष्टशक्तित्वादित्यत आह–सर्गान्तरेष्वपीति। यद्यपि सह शक्त्या प्रधानसाम्यमुपगतः शब्दस्तथापि पुनराविर्भवंस्तच्छक्तियुक्त एवाविर्भवति वर्षातिपातसमधिगतमृद्भाव इवोद्भिजो मेघविसृष्टवारिधारावसेकात्। तेन पूर्वसंबन्धानुसारेण संकेतः क्रियते भगवतेति। तस्मात्संप्रतिपत्तेः सदृशव्यवहारपरम्परायाः नित्यतया नित्यः शब्दार्थयोः सम्बन्धो न कूटस्थनित्य इत्यागमिकाः प्रतिजानते, न पुनरागमनिरपेक्षाः सर्गान्तरेष्वपि तादृश एव संकेत इति प्रतिपत्तुमीशत इति भावः॥२७॥**

**शङ्का**–प्राधानिक अर्थात् प्रकृतिजन्य शब्द महाप्रलय में प्रकृतिभाव (कारणभाव) को प्राप्त होता है। अर्थात् अपने मूलकारण प्रकृति में विलीन हो जाता है। ऐसी स्थिति में प्रधानभाव को प्राप्त शब्द की शक्ति (वाचकता) भी लय को प्राप्त होती है। अन्यथा निराश्रित शब्दनिष्ठ शक्ति कहाँ अवस्थित रहेगी। वाच्यवाचक का नाश होने से उनका पारस्परिक सम्बन्ध (शक्ति) भी नष्ट हो जाता है। तदनन्तर सृष्टि के समय महदादि क्रम से उत्पन्न अवाचक शब्द की वाचकशक्ति महेश्वर के संकेत से अभिव्यक्त होने में समर्थ नहीं होती है, क्योंकि महाप्रलय के समय शब्द की वाचकशक्ति भी नष्ट हो जाती है। (अतः यह मानना चाहिये कि महाप्रलय में लय को प्राप्त हुए वाच्य, वाचक और उनका सम्बन्ध सृष्टिकाल में पुनः उत्पन्न होता है। फलतः वाच्यवाचकसम्बन्ध **'संकेतजन्य'** ही है, न कि **'संकेतद्योत्य'** )।

**समाधान**–शंका-समाधानार्थ भाष्यकार कहते हैं–**'सर्गान्तरेष्वपीति।'** यद्यपि प्रलयकाल में **'शक्ति'** के साथ **'शब्द'** प्रधानतत्त्व में साम्य (लय) को प्राप्त होता है तथापि सृष्टिकाल में शक्तिसहित शब्द का पुनः आविर्भाव होना भी उसी प्रकार है जिस प्रकार वर्षा की समाप्ति पर मृद्भाव को प्राप्त हुए उद्भिज (मेढक) का वर्षाकाल में मेघ की जलधारा से अवसिञ्चित हो पुनः आविर्भूत होना। अतः (पूर्व सृष्टि में वाच्यवाचक के निर्द्धारित) पूर्व सम्बन्ध के अनुसार ही ईश्वर (अग्रिम सृष्टियों में

भी) '**वाच्यवाचकभावसम्बन्ध**' का '**द्योतन**' मात्र करता है। अर्थात् ईश्वर संकेत द्वारा नूतन शब्दार्थसम्बन्ध को उत्पन्न नहीं करता है। इससे सदृशव्यवहारपरम्परा (सम्प्रतिपत्ति) के नित्य होने से शब्द और अर्थ का वाच्यवाचकभावसम्बन्ध भी '**नित्य**' है, किन्तु वह '**कूटस्थनित्य**' नहीं है—ऐसा आगमशास्त्रकार मानते हैं। तात्पर्य यह है कि सर्गान्तरों में भी ईश्वर द्वारा आगमनिरपेक्ष नहीं, अपितु आगमसापेक्ष ही (शब्दार्थसम्बन्ध का) संकेत किया जाता है। फलतः शब्दार्थसम्बन्ध की नित्यता सिद्ध होती है।

**बालप्रिया—**

'**न कूटस्थनित्यः**'— नित्यता दो प्रकार की है—कूटस्थनित्यता तथा प्रवाहरूपनित्यता (परिणामिनित्यता)। चेतनतत्त्व पुरुष (अथवा पुरुषविशेष) को छोड़कर जड़ीय पदार्थों में प्रवाहरूपनित्यता स्वीकृत है। प्रस्तुतसन्दर्भीय शब्दार्थसम्बन्ध की नित्यता भी '**प्रवाह**' रूप है न कि '**कूटस्थ**' रूप॥२७॥

## योगवार्त्तिकम्

**ईश्वरशब्दार्थो विस्तरेण व्याख्यातः। इदानीं तत्प्रणिधानं व्याख्यातुमादौ प्रणिधानाङ्गं मन्त्रं दर्शयति[1]—तस्य वाचकः प्रणवः। तस्येश्वरस्य प्रणवो नामेत्यर्थः—**

**अदृष्टविग्रहो देवो भावग्राह्यो मनोमयः।**
**तस्योंकारः स्मृतो नाम तेनाहूतः प्रसीदति॥**

**इति योगि[2]याज्ञवल्क्यादिवचनेभ्यः। अदृष्टविग्रहोऽद्भुतशरीरो देवः परमात्मा भावग्राह्यो भक्तिमात्रग्राह्यो मनोमयो मनस्तुल्यकारणोपाधिशबलोऽयःशबलाग्निवदित्यादिरर्थः। कर्त्तव्यविचारोपयोगिनमर्थं पूरयति—वाच्य ईश्वर इति। नित्य एव प्रणवेन सहेश्वरस्य वाच्यवाचकभाव इति। श्रद्धाऽतिशयोत्पादनाय संशयपूर्वकमवधारयति—किमस्येति। ईश्वर-प्रणवयोर्वाच्यवाचकता शक्तिः किमस्येश्वरस्य संकेतेनाहार्यान्योन्याध्यासरूपेण कृताऽऽगन्तुकी, यथा पिण्डविशेषे देवदत्तादिनामवाच्यता पितृसंकेतकृता तद्वत्, अथ वा [3]प्रदीपस्य प्रकाशवत्स्वाभाविकी यावद्द्रव्यभाविनीत्यर्थः। विमृष्य सिद्धान्तमाह—स्थित इति। अर्थसम्बन्ध-मेवाभिनयति प्रकाशयतीत्यर्थः। स च शक्त्याख्यसम्बन्ध आधाराधेय[4]वत्स्वरूपसम्बन्धोऽति-रिक्तपदार्थ एव [5]वाऽस्तु। घटादिनाम्नाम[6]प्येवं बोध्यम्। देवदत्तादिनाम्नां तु नैवं यतः**

---

1. क ख घ च छ – **दर्शयति**, ग – **प्रदर्शयति**।
2. क ख ग घ – **याज्ञवल्क्यादिभ्यः**, च छ – **याज्ञवल्क्यादिवचनेभ्यः**।
3. क–**प्रदीप०**, ख ग घ च छ – **प्रदीपस्य**।
4. क ख ग – **भावादिवत्**, घ च छ – **वत्**।
5. क ख ग घ च छ – **वा** उपलभ्यते, ख – **वा** नोपलभ्यते।
6. ख ग घ च छ – **अप्येवं** उपलभ्यते क – **अप्येवं** नोपलभ्यते।

**पुरुष[1]संकेतभेदेनार्थभेदा भवन्तीति। संकेतेनेति। अयमस्य पितेत्याद्येवंरूपेणेत्यन्वयः। ननु शक्तिनित्यत्वेऽपि कदाचित्संकेतभेदाद्देवदत्तादिशब्दवदर्थभेदोऽपि प्रणवस्य स्यादित्याशङ्कायामाह–सर्गान्तरेष्वपीति। [2]अयं संकेतो लौकिको न भवति; अपि तु [3]सर्वज्ञाश्चेतनाशक्तिं पूर्व[4]सिद्धामनुसृत्यैव संकेतं कुर्वन्तीत्याशयः। सम्बन्धनित्यत्वे संप्रतिपत्त्याख्यकार्यनित्यत्वं प्रमाणयति–सम्प्रतिपत्तीति। देवदत्तादिशब्दवद्वाच्यवाचकभावस्यानित्यत्वे कदाचित्संकेतवैपरीत्येन व्यवहारवैपरीत्यमपि स्यादित्याशयः। तथा च सति सर्वत्र शब्दार्थेऽनाश्वासः स्यादित्यागमिनः प्रतिजानते=अवधारयन्तीतिसमग्रवाक्यार्थेनान्वयः॥२७॥**

'**ईश्वर**' शब्द का अर्थ (वाच्य) विस्तारपूर्वक प्रतिपादित किया गया। सम्प्रति, 'ईश्वरप्रणिधान' अर्थात् ईश्वर-चिन्तन की व्याख्या करने के लिये सर्वप्रथम ईश्वरप्रणिधान के अङ्गभूत मन्त्र को सूत्रकार प्रदर्शित करते हैं–'**तस्येति।**' सूत्र का अर्थ है कि '**ईश्वर**' का अभिधायक (नाम) '**प्रणव**' है। यह तथ्य योगियाज्ञवल्क्य के वचन से भी सिद्ध होता है–'**अदृष्टविग्रहो...प्रसीदति**' २/६१ अर्थात् '**देव**' अर्थात् परमात्मा '**अदृष्टविग्रह**' अर्थात् अद्भुत शरीर वाला है, '**भावग्राह्य**' अर्थात् भक्तिमात्र से ग्राह्य तथा '**मनोमय**' अर्थात् मन के समान कारणोपाधि प्रकृष्टसत्त्व चित्त से उसी प्रकार शबलीयुक्त है जिस प्रकार लोहे का शबलित (नारंगी) अग्नि से युक्त होना। (श्लोक की दूसरी पंक्ति का अर्थ है)–'वह ईश्वर '**ओंकार**' नाम से स्मृत (याद किया जाता) है। '**ओंकार**' नाम से पुकारे जाने पर वह प्रसन्न होता है।'

सम्प्रति, भाष्यकार '**प्रणव**' के प्रणिधानोपयोगी अर्थ को बतलाते हैं–'**वाच्य ईश्वर इति।**' वाच्य 'ईश्वर' के साथ वाचक 'प्रणव' का '**वाच्यवाचकभाव**' सम्बन्ध '**नित्य**' ही है। '**ईश्वर**' और '**प्रणव**' के **नित्यसम्बन्ध**' के विषय में (भक्तों में) निष्ठातिशय को उत्पन्न करने लिये भाष्यकार शंकोपस्थापनपूर्वक सिद्धान्त की स्थापना करते हैं–'**किमस्येति।**' **शङ्का**–ईश्वर और प्रणव में निहित वाच्य-वाचकता-शक्ति क्या ईश्वर के 'संकेत' अर्थात् अन्योन्याध्यासरूप आहार्य से कृत अर्थात् आगन्तुक (आकस्मिक) है? जिस प्रकार पिण्डविशेष में देवदत्तादि नाम (वाचक) की वाच्यता पितृसंकेत से कृत अर्थात् निष्पादित होती है; अतः अनित्यरूप है उसी प्रकार क्या ईश्वर में प्रणव की वाच्यता '**संकेतकृत**'. है? अथवा प्रदीप के प्रकाश की भाँति स्वाभाविक अर्थात् यावद्द्रव्यभावी है। अर्थात् जिस प्रकार प्रकाश प्रदीप की स्थिति तक अवस्थित

---

1. क ग घ च छ – **संकेतभेदेन**, ख–**संकेतेन**।
2. क ख ग घ च – **अयं**, छ – **अर्थ०**।
3. क घ – **सर्वज्ञेन शक्तिं**, ख – **सर्वज्ञानानन्तशक्तिं**, ग – **सर्वज्ञानां चैतनाशक्तिं**, च छ – **सर्वज्ञाश्चेतनाशक्तिम्**।
4. क ग घ च छ – **सिद्धां**, ख – **सिद्धानाम्**।

रहता है उसी प्रकार क्या प्रणव भी ईश्वर की स्थिति तक अवस्थित रहता है? अतः यावद्द्रव्यभावी होने से ईश्वर और प्रणव का वाच्यवाचकभाव **सम्बन्ध** नित्य कैसे है?

**समाधान**–उक्त शंका के दोनों विकल्पों का परीक्षण कर भाष्यकार सिद्धान्त बतलाते हैं–'**स्थित इति**।' 'शक्ति' अर्थसम्बन्ध (शब्द के साथ अर्थ के सुनिश्चित सम्बन्ध) को ही प्रकाशित करती है। भाव यह है कि वाच्य का वाचक के साथ सम्बन्ध पूर्व स्थित है। प्रकृत में '**संकेत**' '**प्रणव**' के पूर्वस्थित ईश्वर' अर्थ को ही प्रकट करता है। और यह '**शक्त्याख्य सम्बन्ध**' आधाराधेयभावसम्बन्ध की भाँति '**स्वरूपसम्बन्ध**' है। अथवा इसे अतिरिक्त '**पदार्थ**' ही माना जा सकता है। घटादि नामों में भी इसी प्रकार का सम्बन्ध समझना चाहिये। किन्तु देवदत्तादि नामों में इस प्रकार का सम्बन्ध नहीं है, क्योंकि पुरुषसंकेत के भेद से अर्थभेद होता है। योगवार्त्तिककार भाष्य को उठाते हैं–'**संकेतेनेति**।' जैसे यह इस (पुत्र)का पिता है अथवा यह इस (पिता) का पुत्र है–इस प्रकार पुरुषसंकेत के भेद से अर्थभेद का अन्वय करना चाहिये।

**शङ्का**–शक्ति के नित्य होने पर भी कदाचित् संकेतभेद से देवदत्तादि शब्द के समान प्रणव का अर्थभेद भी माना जाय? अर्थात् '**प्रणव**' कभी ईश्वरातिरिक्त अर्थ का भी वाचक बने?

**समाधान**–ऐसी आशंका होने पर भाष्यकार कहते हैं–'**सर्गान्तरेष्वपीति**।' ईश्वर और प्रणव का यह संकेत लौकिक नहीं है, अपितु विद्वान् लोग पूर्वसिद्ध चेतनाशक्ति का अनुसरण करके ही संकेत करते हैं। सम्बन्ध के नित्य होने पर '**सम्प्रतिपत्ति**' अर्थात् ज्ञानसंज्ञक कार्य की नित्यता को भाष्यकार प्रमाणित करते हैं–'**सम्प्रतिपत्तीति**।' देवदत्तादि शब्द के समान वाच्य-वाचक-भाव के अनित्य होने पर कदाचित् संकेत के विपरीत होने से व्यवहार-वैपरीत्य भी हो सकता है। और ऐसा होने पर सर्वत्र शब्दार्थ में अनाश्वास जागरित होगा, ऐसा आगमिक लोग मानते हैं। इस प्रकार सम्पूर्ण वाक्य का अन्वय करना चाहिये। वैयासिक वाक्य का अर्थ है–सदृश व्यवहार के नित्य होने से शब्दार्थसम्बन्ध भी नित्य है। भाव यह है कि ईश्वरीय ज्ञान के नित्य होने से ईश्वर और प्रणव का वाच्यवाचकभावसम्बन्ध भी नित्य है, वह संकेतकृत नहीं, अपितु संकेतद्योत्य है॥२७॥

भाष्यकार अगले सूत्र को अवतरित करते हैं–

## व्यासभाष्यम्

**विज्ञातवाच्यवाचकत्वस्य योगिनः**–

ईश्वर और प्रणव के वाच्यवाचकसम्बन्ध को जानने वाले योगी को–

### योगसूत्रम्

## तज्जपस्तदर्थभावनम्॥२८॥

उस (पूर्ववर्णित) प्रणव का जप और प्रणव के अर्थरूप ईश्वर की भावना (चित्त में भूयोभूयः निवेशरूप धारणा) करनी चाहिये॥२८॥

### व्यासभाष्यम्

**प्रणवस्य जपः प्रणवाभिधेयस्य चेश्वरस्य [1]भावनम्। तदस्य योगिनः प्रणवं जपतः प्रणवार्थं च भावयतश्चित्तमेकाग्रं संपद्यते। तथा चोक्तम्—**

**स्वाध्यायाद्योगमासीत योगात्स्वाध्यायमा[2]सते।**
**स्वाध्याययोगसंपत्त्या परमात्मा प्रकाशते॥ इति॥२८॥**

ओङ्कार का 'जप' और ओङ्कार के अर्थ 'ईश्वर' की बारम्बार भावना करना (योगी का) कर्त्तव्य है। इस प्रकार ओङ्कार का जप और उसके अर्थ की भावना करते हुए योगी का चित्त एकाग्र हो जाता है। ऐसा कहा भी गया है—'ओङ्कार के जप के अनन्तर (स्वाध्याय से) ईश्वरभावनरूप योग का अनुष्ठान (योगसाधन) करे और ईश्वरभावन (योगसाधन) के अनन्तर जप (स्वाध्याय) करे। इस प्रकार प्रणवजप (स्वाध्याय) तथा ईश्वरभावन (योगसाधन) से परमात्मा का साक्षात्कार होता है'॥२८॥

### तत्त्ववैशारदी

**वाचकमाख्याय प्रणिधानमाह—तज्जपस्तदर्थभावनम्। व्याचष्टे—प्रणवस्येति। भावनं पुनः पुनश्चित्ते निवेशनम्। ततः किं सिध्यतीत्यत आह—प्रणवमिति। एकाग्रं संपद्यते एकस्मिन्भगवत्यारमति चित्तम्। अत्रैव वैयासिकीं गाथामुदाहरति—तथा चेति। तत ईश्वरः समाधितत्फललाभेन तमनुगृह्णाति॥२८॥**

वाच्य ईश्वर के वाचक प्रणव को बतलाकर सूत्रकार ईश्वरचिन्तन (प्राणिधान) का निरूपण करते हैं—'**तदिति**।' भाष्यकार सूत्रार्थ करते हैं—'**प्रणवस्येति**।' सूत्रगत '**भावन**' शब्द का अर्थ है—चित्त में ध्येय तत्त्व का बार-बार सन्निवेश करना अर्थात् अनवरत भावचिन्तन करना।

**शङ्का**—'**प्रणव**' का भूयोभूयः चिन्तन करने से योगी को क्या सिद्ध होता है?

---

1. क ख ग च छ ज झ त थ द ध न ब भ म य – **भावनम्**, घ प फ र – भावना।
2. क ग च छ थ न भ म – **आसते**, ख घ ज झ त द ध प फ ब य र – आमनेत्।

**समाधान**—इस पर भाष्यकार कहते हैं—'**प्रणवमिति।**' '**प्रणव**' का 'जप' और उसके अर्थ '**ईश्वर**' का चिन्तन करने वाले योगी को एकाग्रता निष्पादित होती है। अर्थात् योगी का चित्त एकमात्र '**ईश्वर**' में रमण करता है अर्थात् वह आध्यात्मिक आनन्द को प्राप्त करता है। तदर्थ वैयासिकी गाथा को भाष्यकार उद्धृत करते हैं—'**तथा चेति।**' इस प्रकार (ओङ्कार और योगसाधन का अनवरत अभ्यास करने वाले साधक को) समाधि और उसके (चरम) फल की प्राप्ति कराके ईश्वर भक्त को अनुगृहीत (प्रसन्न) करता है।

**बालप्रिया**—

'**परमात्मा प्रकाशते**'— विष्णुपुराण के इस वचन के अनुसार '**ततः परमात्मसाक्षात्कारो भवति**'—अर्थात् तत्पश्चात् परमात्मा का साक्षात्कार होता है, ऐसा वाक्यशेष समझना चाहिये।

'**स्वाध्यायात्**'—'**प्रणव-जप** के पश्चात् '**योग**' का अभ्यास करे और '**योग**' के पश्चात् पुनः '**प्रणव-जप**' का अभ्यास करे'—यहाँ '**योग**' और '**प्रणव-जप**' के अभ्यास में आनन्तर्य विवक्षित है, क्योंकि '**योग**' और 'जप' का एक साथ अभ्यास सम्भव नहीं है। अतः यहाँ '**योग**' के आदि और अन्त में जप विहित है। यद्यपि गीता में भगवान् श्रीकृष्ण ने—

**'ॐमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्।**
**यः प्रयाति त्यजन् देहं स याति परमां गतिम्।'** ( ८/१३ )

श्लोक के द्वारा प्रणवजपपूर्वक ईश्वरानुचिन्तनरूप ईश्वरप्रणिधान को ही मोक्ष का साक्षात् हेतु बतलाया है तथापि गीता के पूर्ववर्ती श्लोक (८/१२) से 'आस्थितो **योगधारणाम्**'—इत्यंश को निकालकर उसे प्रस्तुत श्लोक के साथ अन्वित कर श्लोक का इस प्रकार अर्थ करना चाहिये—'ओं इत्याकारक जप और उसके अभिधेयभूत मुझ ईश्वर का अनुसरण करके योगप्रक्रिया में अवस्थित होकर भक्त परमगति (कैवल्य) को प्राप्त करता है। अन्यथा '**ईश्वरप्रणिधानाद्वा**' सूत्र द्वारा कथित पतञ्जलि का यह तथ्य बाधित हो जायेगा कि 'ईश्वरप्रणिधान समाधिलाभ द्वारा कैवल्य का हेतु है।' निष्कर्षतः ईश्वरप्रणिधान से अन्तरायाभाव, स्वरूपस्फूर्ति, (जड़ से भिन्न अपने चेतनस्वरूप का अधिगम), सम्प्रज्ञात तथा असम्प्रज्ञात समाधिलाभ और सबसे अन्त में कैवल्य प्राप्त होता है—ऐसा क्रम समझना चाहिये॥२८॥

## योगवार्त्तिकम्

**प्रणिधानाङ्गमन्त्रं प्रदर्श्य साङ्गप्रणिधानस्य स्वरूपं सूत्रकारो वक्ष्यति, तत्सूत्रं पूरयित्वोत्थापयति—विज्ञातेति। सूत्रेण सहान्वयः। तज्जपस्तदर्थभावनम्। सूत्रार्थं व्याचष्टे—**

प्रणवस्येति। [1]प्रणवजपेन सह ब्रह्मध्यानं प्रणिधानम्, तच्च वाच्यवाचकभावं ज्ञात्वा कर्त्तव्यमिति समुदायार्थः।

प्रणवेन परं ब्रह्म ध्यातीत नियतो यतिः॥[2]

इति स्मरणादिति। प्रणवार्थश्चावान्तरभेदैः श्रुत्यादिषु बहुधोक्तः, संक्षेपात्तु गारुडोक्तोऽर्थोऽत्र कथ्यते। यथा गारुडे—

व्यक्ताव्यक्ते च पुरुषस्तिस्रो मात्राः प्रकीर्त्तिताः।
अर्धमात्रा परं ब्रह्म ज्ञेयमध्यात्मचिन्तकैः॥ इति।

प्रणवार्थचिन्तनं च मुख्यतो द्विविधम्—तत्रैकमंशांशिकार्यकारणशक्तिशक्तिमदाद्यभेदेन तप्तायःपिण्डवदविभागलक्षणैकीभावादहं ब्रह्म सर्वं खलु ब्रह्मेत्यादिरूपं भवति तमेतमात्मानमोमिति ब्रह्मणैकीकृत्य ब्रह्म चात्मनोमित्येकीकृत्य इत्यादि श्रुतेः, सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत इत्यादि श्रुतेश्च,[3]

एकः समस्तं यदिहास्ति किंचित्तदच्युतो नास्ति परं ततोऽन्यत्।
सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम्॥

इत्यादिस्मृतेश्च। अपरं प्रकृतितत्कार्यपुरुषेभ्यो विवेकेन केवले ब्रह्मचिन्मात्र आत्मत्वचिन्तनम्, ओमित्येवं ध्यायथ आत्मानं स्वस्ति वः पाराय[4] तमसः परस्मात्, अथात आदेशो नेति नेति, न ह्येतस्मादिति नेत्यन्यत्परमस्ति तमेवैकं जानथ आत्मानम् आत्मेत्येवोपासीत इति श्रुतेः,

प्रकृतिं पुरुषे स्थाप्य पुरुषं ब्रह्मणि न्यसेत्।
अहं ब्रह्म परं ज्योतिः प्रसंख्याय विमुच्यते॥
यः सर्वभूतचित्तज्ञो यश्च सर्वहृदि स्थितः।
यश्च [5]सर्वान्तरे ज्ञेयः सोऽहमस्मीति चिन्तयेत्॥

इति गारुडादिभ्यश्च। तथा—आत्मेति तूपयन्ति ग्राहयन्ति च इति ब्रह्ममीमांसासूत्राच्च। अत्र गारुडवाक्ये पुरुषस्य ब्रह्मणि न्यासो लय एव न त्वभेदः,

विज्ञानात्मनि संयोज्य क्षेत्रज्ञे [6]प्रविलाप्य तम्।
ब्रह्मण्यात्मानमाधारे घटाम्बरमिवाम्बरे॥

---

1. ख ग घ च छ – प्रणवजपेन सह ब्रह्मध्यानं प्रणिधानम्, तच्च वाच्यवाचकभावं ज्ञात्वा कर्तव्यमिति समुदायार्थः उपलभ्यते, क – प्रणव...समुदायार्थः नोपलभ्यते।
2. ख – जपश्च प्रणवं नित्यं ब्रह्मविष्णुशिवात्मकम्। कोटिसूर्यसमं तजो ध्यायेदात्मनि निर्मलम्( यतिः पश्चात्) उपलभ्यते, क ग घ च छ–जपश्च.......निर्मलं नोपलभ्यते।
3. ख – यथा ( श्रुतेश्च पश्चात्) उपलभ्यते, क ग घ च छ–यथा नोपलभ्यते।
4. क ग घ च छ – पाराय, ख–पराय।
5. क घ च छ – सर्वान्तरे, ख ग – सर्वारणिः।
6. क ग घ च छ – प्रविलाप्य तं, ख – प्रविलाप्यते।

इत्यादिवाक्येषु जीवविलापनेन ब्रह्मात्मचिन्तनस्य स्मरणात्, प्रकृतिस्थापनसाहचर्याच्च। अम्बरदृष्टान्तश्च नाखण्डत्वे–

यथाऽग्निरग्नौ संक्षिप्तः समानत्वमनुव्रजेत्।
तथाऽऽत्मा साम्यम[1]भ्येति योगिनः परमात्मना॥

इत्यादि[2]वाक्योक्तस्याग्निवायुजलादिबहुलदृष्टान्तस्य साम्यस्य च विरोधाद्, न्यायानुग्रहेणा[3]ग्न्यालयादिदृष्टान्तानामेव बलवत्त्वाच्च; किंत्वेकरूपस्यौपाधिकमिथ्याविभागनिवृत्तिमात्र इति। विलापनेन च प्रकृत्यादिवज्जीवानामनात्मत्वमेव लभ्यते। तदुक्तं मात्स्ये–

तत्त्वैः संपादितं भुङ्क्ते पुरुषः पञ्चविंशकः।
[4]ईश्वरेच्छावशात्सोऽपि जडात्मा कथ्यते बुधैः॥ इति।

मोक्षधर्मे च–

ते चैनं नाभिनन्दन्ति पञ्चविंशकमप्युत।
षड्विंशमनुपश्यन्तः शुचयस्तत्परायणाः॥ इति।

एतेन प्रकृतिपुरुषौ विलाप्य यच्छिष्टं ब्रह्म तस्मिन्नेवाहं[5]भावे वचनाच्च न जीवे मुख्योऽहंशब्द इति। [6]अनयोश्चिन्तनयोर्मध्ये प्रथमचिन्तनमुपासना, द्वितीयं तत्त्वज्ञानमिति। [7]ब्रह्मात्मताज्ञानं चातिदुर्लभम्। मोक्षधर्मे चोक्तम्[8]–

भवन्ति[9] ज्ञानिनो नित्यं सर्वतश्च निरामयाः।[10]
ऐकात्म्यं नाम कश्चिद्धि कदाचित्प्रतिपद्यते॥ इति दिक्।

प्रणिधान के अङ्गभूत मन्त्र (ओङ्कार) को प्रदर्शित करके सूत्रकार अङ्गसहित प्रणिधान के स्वरूप को बतायेंगे। इससे सम्बन्धित सूत्र को पूरा करने के लिये भाष्यकार लिखते हैं–'**विज्ञातेति**।' इस वैयासिक अंश का सूत्र के साथ अन्वय करना चाहिये। सूत्र है–'**तदिति**।' भाष्यकार सूत्र की व्याख्या करते हैं–'**प्रणवस्येति**।' ओङ्कार के जप के साथ ब्रह्म का ध्यान करना '**प्रणिधान**' कहलाता है। यह प्रणिधान '**ईश्वर**' और '**प्रणव**' के वाच्यवाचकभावसम्बन्ध को जानकर करना चाहिये। यह पूरित भाष्यांश

---

1. क ग घ च छ – **अभ्येति**, ख – **अप्येति**।
2. क ग घ च छ – **वाक्योक्तस्य**, ख – **वाक्येऽस्य**।
3. क च छ – **अग्न्यालयादि०**, क ग – **अग्न्यादि०**, घ – **लयादि०**।
4. क ग घ च छ – **ईश्वरेच्छा०**, ख -- **ईश्वरेण**।
5. क च छ – **भावे**, ख ग घ–**भाव०**।
6. ख ग – **च** (**अनयोः** पश्चात्) **उपलभ्यते**,'क घ च छ – **च** नोपलभ्यते।
7. क ग घ च छ – **ब्रह्मात्मता०**, ख – **ब्रह्म०**।
8. क घ च छ – **चोक्तम्**, ख ग – **प्रोक्तम्**।
9. क ख ग घ च – **भवन्तः**, छ – **भवन्ति**।
10. क घ च छ – **निरामयाः**, ख ग – **निरागसः**।

का अर्थ है। सरलार्थ यह है कि '**विज्ञातवाच्यवाचकत्वस्य योगिनः तज्जपस्तदर्थभावनम्**'– का समुदित अर्थ इस प्रकार करना चाहिये–ईश्वर और प्रणव के वाच्यवाचकभावसम्बन्ध को जानकर योगी को प्रणवजप और उसके वाच्य (ईश्वर) का चिन्तन करना चाहिये। इसमें स्मृतिवाक्य प्रमाण है–'**प्रणवेन...यतिः**' अर्थात् 'संन्यासी को नियमतः (अहर्निश) ओङ्कारजप के द्वारा परब्रह्म का ध्यान करना चाहिये।' श्रुत्यादि शास्त्रों में अवान्तरभेदों सहित प्रणवार्थ को अनेक प्रकार से प्रतिपादित किया गया है। यहाँ गरुडपुराणोक्त प्रणवार्थ को संक्षेपतः बतलाया जा रहा है। जैसा कि गरुडपुराण में कहा गया है–'**व्यक्ताव्यक्ते....चिन्तकैः**' अर्थात् '(प्रणव की) व्यक्त, अव्यक्त और पुरुष–ये तीन मात्राएँ कही गई हैं। इसकी परब्रह्मरूप अर्धमात्रा तत्त्वज्ञों (अध्यात्मवेत्ताओं) द्वारा जानने योग्य है।'

प्रणवार्थचिन्तन मुख्यरूप से दो प्रकार का है। इनमें से पहला वाला प्रणवार्थचिन्तन अंशांशिरूप, कार्यकारणरूप, शक्तिशक्तिमद्रूप–इत्याद्याकारक अभेद के कारण तप्तलोहपिण्डवत् अविभागलक्षणक एकीभावरूप होने से '**अहं ब्रह्म**' अर्थात् मैं ब्रह्म हूँ, '**सर्वं खलु ब्रह्म**' अर्थात् सब कुछ ब्रह्मरूप है– इस प्रकार का है। इसमें निम्नाङ्कित श्रुति और स्मृतिवाक्य प्रमाण हैं–'**तमेतमा....मित्येकीकृत्य**' (श्रुति), '**सर्वं... उपासीत**' (श्रुति) तथा '**एकः समस्तं....भेदमोहम्**' (विष्णु पु. २/१६/२३) स्मृतिवाक्य। स्मृतिवाक्य का अर्थ यह है–'इस संसार में जो कुछ भी व्यस्त और समस्त रूप से है, वह सब 'अच्युत' अर्थात् ब्रह्ममय ही है। उसके अतिरिक्त कुछ नहीं है। वह मैं हूँ, वह तू है और वह सब कुछ है–इत्याकारक (अभेदात्मक) आत्मस्वरूप है। अतः मोहघटित भेद का परित्याग करना चाहिये।'

दूसरा प्रणवार्थचिन्तन इस प्रकार है–प्रकृति, प्रकृति के महदादि कार्य तथा पुरुष से पृथक्तया केवल चिन्मात्ररूप ब्रह्म में आत्मत्वचिन्तन करना–द्वितीय प्रकार का प्रणवार्थ-चिन्तन है। इसमें श्रुतिवाक्य प्रमाण हैं–'**ओमित्येवं...परस्मात्**', '**अथात...नेति**' तथा '**न...वोपासीत**।' इसी प्रकार गरुडपुराण में कहा है–'**प्रकृतिं...चिन्तयेत्**' १/२२९/१० अर्थात्' प्रकृति को पुरुष में स्थापित करके पुरुष को ब्रह्म में स्थापित करे। 'मैं परज्योतिस्वरूप ब्रह्म हूँ'–ऐसा अविप्लुत विवेकज्ञान करके साधक मुक्त हो जाता है। जो सभी प्राणियों के अन्तःकरण का वेत्ता है और जो समस्त हृदयों में स्थित है और जो सभी पदार्थों के भीतर अनुभव करने योग्य है, वह मैं ही हूँ–इस प्रकार साधक को चिन्तन करना चाहिये।' ब्रह्ममीमांसासूत्र से भी यही बात सिद्ध होती है–'**आत्मेति तूपयन्ति ग्राहयन्ति च**' ४/१/३। उक्त गरुडवाक्य में ब्रह्म में पुरुष का जो न्यास बतलाया गया है, वह 'लयरूप' ही है, न कि '**अभेदरूप**'। इसी प्रकार '**विज्ञानात्मनि...मिवाम्बरे**' (श्रीमद्भागवत १/१३/५४)–इत्यादि वाक्यों में ब्रह्मात्म-

चिन्तन के स्मरण से और पुरुष में प्रकृतिस्थापन के साहचर्य से जीव का ब्रह्म में लय होना प्रतिपादित हुआ है। और जो अम्बर (महाकाश) में घटाम्बर (घटाकाश) का लय होना बतलाया गया है, वह जीव-ब्रह्म के अखण्डत्व का प्रतिपादक नहीं है। श्लोक का अर्थ है–'आत्मज्ञान द्वारा मन और बुद्धि को एकत्रकर अपनी बुद्धि को उन्होंने ब्रह्म में उसी प्रकार मिला दिया है जिस प्रकार कोई योगी महाकाश में घटाकाश को मिला देता है।' अम्बर के उक्त दृष्टान्त को जीव-ब्रह्म के अखण्डत्व का प्रतिपादक मानने पर–'**यथाऽग्नि....परमात्मना**' अर्थात् 'जिस प्रकार अग्नि में स्फुलिङ्ग (वह्नि-कण) विलीन होकर तद्रूप हो जाता है, उसी प्रकार योगी (तत्त्वज्ञ) की आत्मा परमात्मा के साथ समत्व (तद्रूपत्व) को प्राप्त करती है'–इत्यादि वाक्यों द्वारा वर्णित अग्नि, वायु, जलादि के बहुत से साम्य-प्रतिपादक दृष्टान्तों के साथ विरोध होगा। किञ्च न्यायबल से अग्न्यादि के लयादिपरक दृष्टान्तों को ही यहाँ प्रधानतया उपन्यस्त किया गया है और जीव-ब्रह्म की एकरूपता का तात्पर्य औपाधिक मिथ्याविभाग (शरीरादि उपाधिवशात् प्रातीतिक भेदज्ञान) की निवृत्तिमात्र करना है। और इस प्रकार के कथन से प्रकृत्यादि के समान जीवों की अनात्मता ही ज्ञात होती है। जैसा कि मत्स्यपुराण में कहा गया है–'**तत्त्वै...बुधैः**' (३/२७-२८) अर्थात् 'पच्चीसवाँ पुरुषतत्त्व प्रकृत्यादि चौबीस तत्त्वों के द्वारा निष्पादित पुरुषार्थ (भोग तथा मोक्ष) को ईश्वरेच्छाधीन होकर भोगता है। बुद्धिमान् लोग इसी पुरुष को '**जडात्मा**' कहते हैं।' मोक्षधर्म में भी कहा है–'**ते चैनं...परायणाः**' (३१८/७९) अर्थात् 'ये चौबीस पदार्थ इस पच्चीसवें पुरुषतत्त्व को प्रसन्न नहीं करते हैं, इसीलिये शुचिशील व्यक्ति छब्बीसवें ईश्वरतत्त्व को देखते हुए उसी में अनुरक्त रहते हैं।'

इस प्रकार प्रकृति और पुरुष का वर्णन करके जो ब्रह्म बचता है, उसी में '**अहंभावना**' ( **अहं ब्रह्मास्मि**–इत्याकारक धारणा) करनी चाहिये। 'जीव' में '**अहम्**' शब्द मुख्य नहीं है। इन दो प्रकार के चिन्तनों (प्रणवार्थभावन) में से प्रथम चिन्तन '**उपासनापरक**' है और द्वितीय चिन्तन '**तत्त्वज्ञानपरक**' है। इनमें यह '**ब्रह्मात्मज्ञान**' ( **अहं ब्रह्मास्मि**–इत्याकारक ज्ञान अथवा ब्रह्म में आत्मभावना) दुर्लभ है। मोक्षधर्म में ब्रह्मात्मज्ञान की दुरुहता कही गई है–'**भवन्ति...प्रतिपद्यते**' (२६९/११) अर्थात् 'तत्त्वज्ञानी लोग आत्यन्तिक तथा ऐकान्तिकरूप से दुःखरहित होते हैं। किन्तु ब्रह्मात्मता (ब्रह्मैक्य) को कोई तत्त्वज्ञानी कदाचित् ही प्राप्त होता है।'

सम्प्रति, ईश्वरप्रणिधान से प्राप्त होने वाले फल के विषय में विचार किया जा रहा है–

**योगवार्त्तिकम्**

**ईश्वरप्रणिधानादिति पञ्चम्युक्तमसंप्रज्ञातपर्यन्तयोगहेतुत्वं [1]तत्त्वप्रणिधानस्य येन द्वारेण तदाह—[2]तदस्येति। [3]प्रणिधानादिभिश्चैकाग्रो भवति, ततश्च परमात्मसाक्षात्कारः, ततः परवैराग्यादसंप्रज्ञातयोग इति शेषः[4],**

**स्वाध्याययोगसंपत्त्या परमात्मा प्रकाशते॥**

**इति वक्ष्यमाणवाक्यस्वरसात्। उक्तार्थे स्वपितुर्वाक्यं विष्णुपुराणस्थं प्रमाणयति—तथा चोक्तमिति। योगजपयोरेकदा न संभव इति योगस्याद्यन्तयोर्व्युत्थानकाले जप उक्तः।**

**ईश्वरप्रणिधानाद्वा** १/२३ सूत्र में पञ्चमी विभक्ति के प्रयोग से यह बतलाया गया है कि '**ईश्वरप्रणिधान**' असम्प्रज्ञातपर्यन्त '**योग**' का हेतु है। ईश्वरप्रणिधान जिस द्वार से चरमयोग का कारण होता है, उसे भाष्यकार बतलाते हैं—'**तदस्येति**।' ईश्वरप्रणिधानादि साधनों से चित्त एकाग्र होता है। तदनन्तर चित्तैकाग्रता से परमात्मा का साक्षात्कार होता है और इसके पश्चात् 'परवैराग्य' से असम्प्रज्ञात योग प्राप्त होता है। यह क्रम भाष्य में आगे बतलाये गये '**स्वाध्याय...प्रकाशते**'—इस वाक्य के अनुसार है। भाष्यकार उक्त अर्थ में विष्णुपुराण में उद्धृत अपने पिता के वाक्य को प्रमाणरूप से उपस्थित करते हैं—'**तथा चोक्तमिति**।' अभिप्राय यह है कि योग और जप एक साथ नहीं हो सकते हैं, इसलिये योग के आदि और अन्त के व्युत्थानात्मक काल में जप विहित है।

सम्प्रति, योगवार्त्तिककार शंकोपस्थापनपूर्वक उपरिनिर्दिष्ट योगक्रम की युक्तियुक्तता को परिपुष्ट करते हैं—

**योगवार्त्तिकम्**

**ननु परमात्मसाक्षात्कारात् परवैराग्यं भवतीति यदुक्तं तन्नोपपद्यते, आत्मसाक्षात्कारेणैवाभिमाननिवृत्त्या [5]परवैराग्यसंभवादिति? अत्रोच्यते—ब्रह्मज्ञानं ताटस्थ्येनात्र न विवक्षितं किं त्वात्मत्वेनैव। तथा च जीवात्मतत्त्वज्ञानाद् बुद्धि[6]पर्यन्तमभिमाननिवृत्तिवत् परमात्मज्ञानाद् जीवपर्यन्तेष्वभिमानो निवर्त्तते, पञ्चविंशतितत्त्वानि विलाप्यैव सोऽहमित्यात्मतयाऽधिष्ठानब्रह्मसाक्षात्कारादिति।**

---

1. क घ च छ – **तत्त्व०**, ख ग – **तत्०**।
2. क घ – **तदिति**, ख ग च छ – **तदस्येति**।
3. क घ च छ – **प्रणिधानादिभिश्चैकाग्रः**, ख ग – **प्रणिधानादीश्वरैकाग्र्यम्**।
4. ख – **स्वाध्याययोग इति शेषः** ( **शेषः** पश्चात् ) उपलभ्यते, क ग घ च छ – **स्वाध्याययोग इति शेषः** नोपलभ्यते।
5. क ग घ च छ – **परवैराग्यसंभवात्**, ख – **परवैराग्यं संभवति**।
6. क ग घ च छ – **पर्यन्तं**, ख – **पर्यन्तेषु**।

**शङ्का**–'परमात्मसाक्षात्कार' से 'परवैराग्य' होता है, यह जो आपने कहा है, वह ठीक नहीं है, क्योंकि (**'परमात्मसाक्षात्कार'** के विना ) **'आत्मसाक्षात्कार'** से ही अभिमान की निवृत्ति द्वारा **'परवैराग्य'** हो सकता है?

**समाधान**–इस शङ्का के समाधानार्थ योगवार्त्तिककार कहते हैं–यहाँ ब्रह्मज्ञान तटस्थरूप से विवक्षित नहीं है, किन्तु आत्मत्वेन ही विवक्षित है। (भाव यह है कि यहाँ ब्रह्म का ज्ञान आत्मत्वेन='ब्रह्म आत्मा है' इस रूप से कहा गया है, न कि तटस्थरूप से)। अतः जैसे जीवात्मा के साक्षात्कार से बुद्धिपर्यन्त होने वाला आत्मत्वाभिमान निवृत्त हो जाता है, वैसे ही परमात्मसाक्षात्कार से जीवपर्यन्त होने वाला आत्माभिमान निवृत्त हो जाता है, क्योंकि पञ्चविंशति तत्त्वों का ज्ञान करके ही **'मैं वह हूँ'** इत्याकारक आत्मभावना से अधिष्ठानभूत **'ब्रह्म'** की **'अपरोक्षानुभूति'** साधक को होती है।

**बालप्रिया**–

**'ब्रह्मज्ञानं ताटस्थ्येनात्र न विवक्षितम्'**–वेदान्त में दो प्रकार से **'ब्रह्म'** का लक्षण किया गया है–**'स्वरूपलक्षण'** तथा **'तटस्थलक्षण'**। द्विविध लक्षणों में से स्वरूपभूत लक्षण को **'स्वरूपलक्षण'** कहते हैं, जैसे–**'सत्यं ज्ञानमनन्तं ब्रह्म'** (तै. २/१-१ ), **'आनन्ददो ब्रह्मेति व्यजानात्'** (तै. ३-६ ) ये श्रुतियाँ ब्रह्म के **'स्वरूपलक्षण'** की प्रतिपादिका हैं। जो लक्षण लक्ष्य के यावत्कालपर्यन्त स्थिर न रहकर लक्ष्य का व्यावर्तक मात्र (अन्य पदार्थ से भेदक मात्र) होता है, उसे **'तटस्थलक्षण'** कहते हैं। जैसे प्रकृत में **'जगज्जन्मादिकारणत्व'** ब्रह्म का **'तटस्थलक्षण'** है। इस परिप्रेक्ष्य में योगवार्त्तिककार के कथन का अभिप्राय यह है कि 'परमात्मसाक्षात्कार से परवैराग्योदय होता है'–यह जो कहा गया है, वह परमात्मा (ब्रह्म) के आत्मत्वरूप **'स्वरूपलक्षण'** की दृष्टि से ही विहित है, न कि **'तटस्थलक्षण'** की दृष्टि से। इस प्रकार पूर्वपक्षी द्वारा प्रस्तावित शंका का समाधान हो जाता है।

शंकोपस्थापनपूर्वक प्रकृत तथ्य को पुनः स्पष्ट करते हुए योगवार्तिककार कहते हैं–

## योगवार्त्तिकम्

**नन्वेवं जीवस्याप्यनात्मत्वं प्रसक्तमिति चेत्? न, व्यावहारिकपारमार्थिकभेदेनात्मद्वयाभ्युपगमात्। आत्मत्वं हि संघाता[1]ध्यक्षत्वं क्षेत्रज्ञत्वं च, तच्चेश्वरस्यैवास्ति, ईश्वरत्ववज्[2]जीवात्मनां परतन्त्रत्वाद्, धर्माधर्माद्यज्ञातृत्वाच्च। जीवानां च चितिशक्तिमत्तामात्रे-**

1. क – ज्ञातृत्वं, ख ग च छ – अध्यक्षत्वं, घ – साक्षित्वम्।
2. क ख ग – जीवानां, घ च छ – जीवात्मनाम्।

णैवात्मत्वं गौणं बुद्ध्याद्यापेक्षिकं च, यथा हिरण्यगर्भादीनामीश्वरत्वं [1]तद्वज्जीवानामात्मत्वं बन्धमोक्षभोगादिभागितया सिद्धं लोकव्यवहारगोचरतया च व्यावहारिकमेव। एवमेवा[2]हंत्वं-शब्दोऽपि परमात्मन्येव मुख्यो न तु जीवे, प्रयोगादिषु स्वातन्त्र्याभावेन प्रयोक्त्रात्मत्वादिरूप-स्याहमादिशब्दप्रवृत्तिनिमित्तस्य जीवेष्वभावादिति। तथा चोक्तम्—

त्वामात्मानं परं मत्वा परम् आत्मानमेव च।
आत्मा पुनर्बहिर्मृग्य अहो [3]ज्ञजनताऽज्ञता॥ इति।

परम्=अनात्मानम्। यद्यपि जीवो मुख्यात्मा न भवति तथाऽपि तज्ज्ञानादपि धर्माधर्म-रागादिनिवृत्त्या मोक्षस्तु भवत्येवेति। एतेन व्यवहारपरमार्थभेदादैकात्म्यनानाऽऽत्मतावादौ श्रुतिस्मृतिदर्शनेष्वविरुद्धावित्यपि सिद्धम्। अधिकं तु ब्रह्ममीमांसाभाष्ये विज्ञानामृते द्रष्टव्यमिति दिक्।

[4]तदिदमीश्वरप्रणिधानाद्वेत्यादिसूत्रगणोक्तमर्थजातं लिङ्गपुराणे स्पष्टं [5]प्रदर्शितम्। यथा—

अविद्ययेशस्य योगो नातीतो नाप्यनागतः।
नाप्यस्त्यस्मितया चैवं रागेणापि त्रिकालता॥
कालेषु त्रिषु संबन्धस्तस्य द्वेषेण नो भवेत्।
तथैवाभिनिवेशेन संबन्धो न कदाचन॥
कुशलाकुशलैश्चैव संबन्धो नैव कर्म्मभिः।
भवेत् कालत्रये शंभोरविद्यामतिवर्जनात्॥
विपाकैः कर्मणां तस्य न भवेदेव संगमः[6]
कालेषु त्रिषु शर्वस्य शिवस्य शिवदायिनः॥
सुखदुःखैर्न संस्पृश्यः कालत्रितयवर्तिभिः।
तथैव भोगसंस्कारैर्भगवानन्तकान्तकः॥
पुंविशेषः परो देवो भगवान् परमेश्वरः।
चेतनाचेतनोन्मुक्तः प्रपञ्चादखिलात्परः॥
लोके सातिशयत्वेन ज्ञानैश्वर्ये विलोकिते।
शिवे नातिशयित्वेन स्थिते आहुर्मनीषिणः॥

---

1. क ग घ च छ — तद्वज्जीवानामात्मत्वं बन्धमोक्षभोगादिभागितया सिद्धं लोकव्यवहारगोचरतया च उपलभ्यते, ख — तद्वत्.....गोचरतया च नोपलभ्यते।
2. क ख ग च छ — अहं त्वं, घ — हंस०।
3. क ग — अज्ञजनता, ख — ज्ञानजनता, घ च छ — ज्ञजनता।
4. क ग घ च छ — तत्, ख — यत्।
5. क ख घ च छ — प्रदर्शितं, ग — दर्शितम्।
6. क ख ग — संगमः, घ च छ — संयमः।

प्रतिसर्गं [1]वस्तुभानं ब्रह्मणः शास्त्रविस्तरम्।
[2]उपदेशात्स एष्टव्यः कालावच्छेदवर्त्तिनाम्॥
कालावच्छेदयुक्तानां गुरुणामप्यसौ गुरुः।
सर्वेषामपि सर्वेशः कालावच्छेदवर्जितः॥
अनादिरेव संबन्धो विज्ञानोत्कर्षयोः परे।
स्थितयोरीदृशः शर्वः परिशुद्धः स्वभावतः॥
आत्मप्रयोजनाभावे परानुग्रह एव हि।
प्रयोजनं समस्तानां क्रियाणां परमेष्ठिनः॥
प्रणवो वाचकस्तस्य शिवस्य परमात्मनः।
शिवरुद्रादिशब्दानां प्रणवो हि परः स्मृतः॥
शंभोः प्रणववाच्यस्य भावना तज्जपादपि।
आशु सिद्धिः परा प्राप्या भवत्येव न संशयः॥
[3]एकं ब्रह्ममयं ध्यायेत्सर्वं विप्र! चराचरम्।
चराचरविभागं च त्यजेदहमिति स्मरन्॥
सप्ताण्डावरणान्याहुरण्डस्यात्माऽम्बुजासनः।
कोटिकोट्ययुतानीशे चाण्डानि कथितानि तु॥
तत्र तत्र चतुर्वक्त्रा ब्रह्माणो हरयो भवाः।
सृष्टाः प्रधानेन तथा प्राप्य शंभोस्तु सन्निधिम्॥[4]
असंख्याताश्च रुद्राख्या असंख्याताः पितामहाः।
हरयश्चाप्यसंख्याता एक एव महेश्वरः॥
ब्रह्मेन्द्रविष्णुरुद्राद्यैरपि देवैरगोचरम्।
आदिमध्यान्तरहितं भेषजं भवरोगिणाम्॥
शिवतत्त्वमिति ख्यातं शिवादपि परं पदम्॥ इति॥२८॥

**शङ्का**–उपरिनिर्दिष्ट प्रक्रिया से तो जीव की भी अनात्मता (जडता) सिद्ध होगी?
**समाधान**–ऐसा नहीं है, क्योंकि व्यावहारिक और पारमार्थिक भेद से आत्मा के दो प्रकार स्वीकृत होने से संघाताध्यक्षत्व और क्षेत्रज्ञत्व को ही '**आत्मत्व**' कहते हैं और ऐसा '**आत्मत्व**' ईश्वर में ही है, जीवात्मा तो ईश्वरत्ववत् हैं क्योंकि जीवात्माओं में परतन्त्रत्व तथा धर्माधर्मादि का अज्ञातृत्व है। जीवों में जो '**आत्मत्व**' व्यवहार किया

---

1. क घ च छ – **वस्तुभानं ब्रह्मणः**, ख ग – **प्रसूतानां ब्रह्मणाम्।**
2. क ग घ च छ – **उपदेशात्स एष्टव्यः**, ख – **उपदेष्टा स एवासौ।**
3. क ख घ च छ – **एकं**, ग – **एवम्।**
4. क ख घ च छ – **सन्निधिः**, ग – **सा निधिम्।**

जाता है, वह तो जीवों के **'चितिशक्तिमत्'** (चैतन्यस्वरूप) होने के कारण गौण है अथवा अनात्मभूत बुद्ध्यादि की अपेक्षा से जीव में **'आत्मत्व'** व्यवहार किया जाता है। जिस प्रकार हिरण्यगर्भादि गौणरूप से **'ईश्वर'** कहे जाते हैं, उसी प्रकार बन्ध-मोक्ष-भोगादि का कारण होने से तथा लोकव्यवहार का विषय होने के कारण **'जीव'** में **'आत्मत्व'** प्रयोग व्यवहारिक ही सिद्ध होता है। इसी भाँति **'अहम्'** और **'त्वम्'** (मैं और तू) शब्द भी **'परमात्मा'** में ही मुख्य (प्रधान) हैं, न कि जीव के लिये इनका मुख्य-प्रयोग किया जाता है। **'अहं गच्छामि'** इत्यादि प्रयोगादियों में **'जीव'** के लिये **'अहं'** शब्द के प्रयोग का स्वातन्त्र्याभाव होने से प्रयोक्तृत्व, आत्मत्वादिरूप **'अहम्'** आदि शब्द के प्रवृत्तिनिमित्त का जीव में अभाव है। जैसा कि कहा गया है– **'त्वामात्मानं...ऽज्ञता'** (श्रीमद्भाग. १०/१४/२७) अर्थात् 'अहो! अज्ञानियों की कैसी अज्ञानता है कि आप आत्मा को अन्य मानकर और अन्य देहादियों को आत्मा मानकर फिर आत्मा को कहीं बाहर ढूँढते हैं।' यहाँ **'पर'** शब्द का अर्थ **'अनात्म'** है। यद्यपि जीव मुख्यात्मा नहीं है, तथापि जीव के साक्षात्कार से भी धर्म, अधर्म, रागादि की निवृत्ति होने से मोक्ष तो होता ही है। इस प्रकार व्यावहारिक और पारमार्थिक रूप से आत्मा की द्विविधता प्रतिपादित होने से श्रुति-स्मृति-ग्रन्थों तथा दर्शन में वर्णित **'एकात्मवाद'** और **'नानात्मवाद'** भी परस्पर अविरुद्ध ही सिद्ध होते हैं। अर्थात् आत्मविषयक प्रवर्त्तित उभयवाद की सङ्गति लग जाती है। विषय का विशदीकरण ब्रह्ममीमांसा के **'विज्ञानामृतभाष्य'** (स्वनिर्मित ग्रन्थ) में द्रष्टव्य है।

**ईश्वरप्रणिधानाद्वा'**–इत्यादि सूत्रसमूह में वर्णित तथ्य (विषय) लिङ्ग पुराण में स्पष्टतया प्रतिपादित हुआ है। जैसे–**'अविद्या...परं पदम्'**–अर्थात् 'ईश का अविद्या के साथ संयोग न अतीतकाल में था, और न अनागतकाल में होगा और न वर्तमान-काल में है। इस प्रकार ईश तीनों कालों में अविद्या, अस्मिता और रागादि से असंस्पृष्ट है। उसका तीनों कालों में न तो द्वेष के साथ सम्बन्ध रहा और न कभी अभिनिवेश के साथ। भ्रमज्ञान से रहित होने के कारण ईश का तीनों कालों में कभी भी पुण्यकर्म तथा पापकर्म से सम्बन्ध नहीं रहा है। कल्याणकारी, विष्णुस्वरूप शिव भगवान् का तीनों कालों में कभी भी कर्मजन्य विपाकों (फलों) से सम्बन्ध नहीं रहा है॥ अन्तकान्तक अर्थात् यम का भी अन्त करने वाला भगवान् जिस प्रकार तीनों कालों में विद्यमान रहने वाले सुख-दुःख से संस्पृष्ट नहीं होता है, उसी प्रकार वह भोग-संस्कारों से भी युक्त नहीं होता है॥ पुरुषविशेष जो परदेवता है, वही भगवान् ईश्वर है। वह जड-चेतनात्मक पदार्थों से उन्मुक्त और अखिल प्रपञ्च से परे है॥ संसार में सातिशय (न्यूनाधिक) रूप से ज्ञान और ऐश्वर्य दिखलाई पड़ते हैं, किन्तु ईश्वर में ज्ञान और ऐश्वर्य सातिशयरूप से नहीं रहते हैं अर्थात्

ईश्वर में ज्ञानादि निरतिशय हैं, ऐसा विद्वान् लोग कहते हैं॥ प्रत्येक सृष्टि के प्रारम्भ में उत्पन्न कालावच्छिन्न जीवों को ब्रह्म के उपदेश से शास्त्रों का ज्ञान अभीष्ट होता है। और यही सभी जीवों का उपदेष्टा है॥ कालावच्छिन्न अर्थात् काल की सीमा से युक्त हिरण्यगर्भादि सभी गुरुओं का भी 'परमगुरु' 'ईश्वर' कालातीत सीमातीत (कालानवच्छिन्न) कहलाता है॥ पूर्वस्थित विज्ञान और उसके उत्कर्ष का अनादिसम्बन्ध ही है और इस प्रकार के अनादिसम्बन्ध वाला ईश्वर स्वभावतः परिशुद्ध है॥ आत्मप्रयोजन का अभाव रहने पर भी परमेश्वर की समस्त क्रियाओं का प्रयोजन परानुकम्पा (दूसरों को अनुगृहीत करना) ही है॥ उस शिवेश्वर का वाचक '**प्रणव**' है, क्योंकि शिव, रुद्रादि शब्दों से '**प्रणव**' को श्रेष्ठ कहा गया है॥ प्रणव के वाच्यभूत शम्भु (ईश्वर) का चिन्तन और प्रणव का जप करने से भी त्वरित उत्कृष्ट सिद्धि प्राप्त होती है, इसमें सन्देह नहीं है॥ हे ब्राह्मण श्रेष्ठ! समस्त चराचरात्मक उस ब्रह्म का ध्यान कर और 'मैं वही हूँ' इस प्रकार स्मरण करते हुए चराचर के विभाग को त्याग दे॥ सप्ताण्डावरण कहे गये हैं और अम्बुजासन (ब्रह्म) अण्ड की आत्मा है। सैकड़ों असंख्य बतलाये गये अण्डावरणों को ब्रह्म अपने अधीन रखता है॥ उन-उन अण्डावयवों में चतुर्मुख ब्रह्म, हरि निवास करते हैं। इसी प्रकार शिव के सान्निध्य को प्राप्त करके प्रधान के द्वारा ये उत्पन्न हुए॥ (इस प्रकार ब्रह्माण्ड में) असंख्य 'रुद्र', असंख्य पितामह और असंख्य हरि हैं। और इन सबका एक ही महेश्वर है॥ सांसारिक रोगियों के आदि, मध्य और अन्तरहित भैषज्य (औषधि) को ब्रह्म, इन्द्र, विष्णु, रुद्रादि देवता भी नहीं जानते हैं॥ यह 'शिवतत्त्व' ही प्रसिद्ध (जानने योग्य) है और शिव से भी परे '**परमपद**' 'ईश्वर' है॥२८॥

### व्यासभाष्यम्

**किञ्चास्य भवति?–**

तथाकथित ईश्वरप्रणिधान का और क्या फल है? (उत्तर है)–

### योगसूत्रम्

## ततः प्रत्यक्चेतनाधिगमोऽ[1]प्यन्तरायाभावश्च॥२९॥

ईश्वरप्रणिधान से जीवात्मा के स्वरूप का दर्शन और (वक्ष्यमाण) विघ्नों का अभाव होता है॥२९॥

---

1. **अपि** – नोपलभ्यते।

### व्यासभाष्यम्

**ये तावदन्तराया व्याधिप्रभृतयः ते तावदीश्वरप्रणिधानान्न भवन्ति। स्वरूपदर्शनमप्यस्य भवति। यथैवेश्वरः पुरुषः शुद्धः प्रसन्नः केवलोऽनुपसर्गस्तथायमपि बुद्धेः प्रतिसंवेदी [1]यः पुरुषः इत्येवमधिगच्छति॥२९॥**

व्याधि इत्यादि जो योग के विघ्न हैं, वे सब ईश्वरप्रणिधान से नहीं होते हैं और योगी को अपने स्वरूप का दर्शन भी होता है। जैसे पुरुषविशेष ईश्वर शुद्ध, दुःखादिरहित, केवल और कर्मफल से अस्पृष्ट है, वैसे ही बुद्धि का साक्षी यह पुरुष भी है—इस प्रकार योगी जान लेता है॥२९॥

### तत्त्ववैशारदी

**किं च [2]परमस्मात्—ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च। प्रतीपं विपरीतमञ्चति विजानातीति प्रत्यक्, स चासौ चेतनश्चेति प्रत्यक्चेतनोऽविद्यावान् पुरुषः। तदनेनेश्वराच्छाश्वतिकसत्त्वोत्कर्षसंपन्नाद्विद्यावतो निवर्तयति। अविद्यावतः[3] प्रतीचश्चेतनस्याधिगमो ज्ञानं स्परूपतोऽस्य भवति। अन्तराया वक्ष्यमाणास्तदभावश्च। अस्य विवरणम्—ये तावदिति। स्वमात्मा तस्य रूपम्। रूपग्रहणेनाविद्यासमारोपितान्धर्मान्निषेधति।**

इससे आगे योगी को क्या प्राप्त होता है? अर्थात् ईश्वरप्रणिधान का केवल समाधिलाभ ही प्रयोजन है अथवा अन्य भी कोई प्रयोजन है? इस पर सूत्रकार कहते हैं—'**तत इति।**' '**प्रतीपं=विपरीतमञ्चति=विजानातीति प्रत्यक् स चासौ चेतनश्चेति प्रत्यक्चेतनः**'—इस व्युत्पत्ति के अनुसार '**प्रत्यक्चेतन**' शब्द का अर्थ (जो विपरीतरूप से जानता है ऐसा) अविद्यावान् पुरुष है। इस व्युत्पत्ति से नैसर्गिक (शाश्वतिक) सत्त्वोत्कर्षसम्पन्न विद्यावान् '**पुरुषविशेष**' ईश्वर से '**सामान्यपुरुष**' की व्यावृत्ति हो जाती है। (ईश्वरप्रणिधान से) अज्ञानी पुरुष को अपने वास्तविक चैतन्यस्वरूप का साक्षात्कार (ज्ञान) होता है और वक्ष्यमाण व्याधि, स्त्यान आदि अन्तरायों (विघ्नों) का विध्वंस (आत्यन्तिक अतीतावस्थाक परिणाम) होता है। भाष्यकार ने इसी तथ्य को विवृत (उद्घाटित) किया है—'**ये तावदिति।**' '**स्व**' शब्द का अर्थ है—आत्मा और उसका जो रूप है, उसे '**स्वरुप**' कहते हैं। इस प्रकार '**स्वरूप**' शब्द का अर्थ हुआ—'आत्मा।' '**स्वदर्शन**' के स्थान पर भाष्यकार ने '**स्वरूपदर्शन**' में '**रूप**' पद का प्रयोग क्यों किया है, इसे स्पष्ट करते हुए तत्त्ववैशारदीकार कहते हैं कि—'**रूप**' पद

---

1. क ग घ ध न प फ ब भ म य र — **यः** उपलभ्यते, ख च छ ज झ त थ द — **यः** नोपलभ्यते।
2. क ख ग घ च झ त न — **परम्**, च ज थ द ध — **अपरम्**।
3. थ द ध न — **अविद्यावतः** उपलभ्यते, क ख ग घ च छ ज झ त — **अविद्यावतः** नोपलभ्यते।

के ग्रहण से अविद्या के कारण पुरुष में आरोपित (आरूढ) होने वाले धर्मों का निषेध किया गया है। अर्थात् ईश्वरप्रणिधान से भक्तिपरायण जीव को आरोपित धर्म से रहित अपने वास्तविक चैतन्यस्वरूप का अवबोध होता है। अतः आरोपित-धर्मराहित्य की स्थिति प्रदर्शित करने के लिये भाष्यकार व्यासदेव ने **'स्वरूपदर्शन'** में **'रूप'** शब्द का ग्रहण किया है।

**बालप्रिया–**

**'अपि'**–सूत्र में **'अपि'** अव्यय का प्रयोग दृढ़तापूर्वक यह बतलाने के लिये किया गया है कि ईश्वरप्रणिधान से न केवल समाधिलाभ आसन्नतम होता है अपितु अविद्यावशात् आरोपित धर्म से रहित आत्मस्वरूप का साक्षात्कार भी होता है।

**'तदनेन...निवर्तयति'**–तत्त्ववैशारदीकार ने **'प्रत्यक्चेतन'** पद की पूर्वनिर्दिष्ट व्युत्पत्ति इसलिये की है, जिससे जीव को ईश्वर से पृथक् किया जा सके। सामान्यतया **'प्रति वस्तु अञ्चति इति प्रत्यक्'** इस व्युत्पत्ति से तथा **'प्रत्यक् प्रशान्तं भगवच्छब्दसंज्ञं यद्वासुदेवं कवयो वदन्ति'**–इत्यादि शास्त्रवचन से **'प्रत्यक्'** शब्द **'ईश्वर'** अर्थ का ही बोधक है, क्योंकि 'ईश्वर' ही प्रत्येक वस्तु में विद्यमान है न कि 'जीव'।

**'प्रत्यक्चेतनाधिगमः'**–पद द्वारा प्रदिपादित उक्त फल को लेकर साध्यसाधन-विषयक विचार किया जा रहा है–

## तत्त्ववैशारदी

**नन्वीश्वरप्रणिधानमीश्वरविषयं कथमिव प्रत्यक्चेतनं साक्षात्करोति, अतिप्रसङ्गादित्यत आह–[1]यथैवेश्वर इति। शुद्धः कूटस्थनित्यतयोदयव्ययरहितः प्रसन्नः क्लेशवर्जितः केवलः धर्माधर्मापेतः। अत एवानुपसर्गः।** उपसर्गाः जात्यायुर्भोगाः। **सादृश्यस्य किञ्चिद्भेदाधिष्ठान-त्वादीश्वराद् भिनत्ति–बुद्धेः प्रतिसंवेदीति। तदनेन प्रत्यग्ग्रहणं व्याख्यातम्।**

**शङ्का–**ईश्वरविषयक ईश्वरप्रणिधान कैसे **'प्रत्यक्चेतन'** अर्थात् जीवसाक्षात्कारविषयक हो सकता है। क्योंकि ऐसा मानने में अतिप्रसङ्ग (अतिप्रसक्ति, अतिव्याप्तिदोष) होता है। उक्त शंका का स्पष्टीकृत रूप यह है–प्रणिधान सकर्मक क्रिया है। इस क्रिया का कर्त्ता जिस फल को प्राप्त करता है, वह फल भी उस क्रिया-कर्म-विषयक ही होता है–इस नियम से प्रकृत में प्रणिधान ईश्वरविषयक होने से तत्फल (साध्य) भी ईश्वरविषयक होना चाहिये। ईश्वरविषयक प्रणिधान का जीव-साक्षात्कारविषयक तद्भिन्न फल मानने में साध्यसाधनभाव उपपन्न नहीं होता है। अतः यह अतिप्रसक्ति शोचनीय है।

1. क ख ग घ च छ ज झ त ध द ध – **यथा**, न – **तथा**।

**समाधान**–इस (प्रातीतिक अतिप्रसक्ति के निवारण) के लिये भाष्यकार कहते हैं– '**यथैवेश्वर इति**।' जिस प्रकार 'ईश्वर' **शुद्ध** अर्थात् कूटस्थनित्य होने से उत्पत्तिनाश-रहित, '**प्रसन्न**', '**केवल**' अर्थात् धर्माधर्म से वियुक्त अतएव '**अनुपसर्ग**' अर्थात् जाति, आयु तथा भोगरूप उपसर्ग से पृथक् है, उसी प्रकार जीवात्मा भी है। किन्तु सादृश्य में किञ्चिद् भेद विवक्षित रहता है। अतः अधिष्ठानभूत 'ईश्वर' से जीवात्मा में अल्प भेद है। भाष्यकार इसे स्पष्ट करते हैं–'**बुद्धेः प्रतिसंवेदीति**।' जीव (पुरुष) बुद्धिवृत्तिप्रतिबिम्ब को ग्रहण करता है, ईश्वर नहीं। इससे सूत्र में विपरीतार्थक '**प्रत्यक्**' शब्द का ग्रहण क्यों किया गया, यह भी व्याख्यात हो जाता है।

'**अत्यन्तसदृश**' के उपरिवर्णित सिद्धान्त को–'**अत्यन्तविसदृश**' की विपरीत स्थिति द्वारा तत्त्ववैशारदीकार सुदृढ करते हैं–

### तत्त्ववैशारदी

**अत्यन्तविधर्मिणोरन्यतरार्थानुचिन्तनं न तदितरस्य साक्षात्काराय कल्पते। [1]सदृशार्थानुचिन्तनं तु सदृशान्तरसाक्षात्कारोपयोगितामनुभवति एकशास्त्राभ्यास इव तत्सदृशार्थ-शास्त्रान्तरज्ञानोपयोगिताम्। प्रत्यासत्तिस्तु स्वात्मनि साक्षात्कारहेतुर्न परात्मनीति सर्वम-वदातम्॥२९॥**

अत्यन्त विसदृश धर्म वाले दो पदार्थों में से किसी एक पदार्थ का चिन्तन अपने से भिन्न पदार्थ का साक्षात्कार कराने में समर्थ नहीं होता है। किन्तु दो सदृश पदार्थों में से किसी एक पदार्थ का चिन्तन अपने समानजातीय पदार्थान्तर का साक्षात्कार कराने की योग्यता रखता है। जैसे एक शास्त्रविषयक अभ्यास में अपने सदृश अर्थ वाले शास्त्रान्तरों का ज्ञान कराने की योग्यता निहित रहती है। किञ्च ईश्वरविषयक चिन्तन अत्यन्त सदृश स्वात्मा के साक्षात्कार का हेतु है, न कि दूसरे के आत्मा के साक्षात्कार का हेतु। अतः ईश्वरविषयक चिन्तन का '**स्वरूपदर्शन**' फल असङ्गत नहीं है। इस प्रकार सब कुछ स्पष्ट हो जाता है॥२९॥

**बालप्रिया**–

'**अत्यन्तविधर्मिणः**' वाक्य द्वारा तत्त्ववैशारदीकार ने पूर्वपक्षी की निम्नाङ्कित शंका को निरस्त किया है। शंका इस प्रकार है–ईश्वरचिन्तन से '**स्वरूपाधिगम**' ही क्यों होता है? कामिनी (स्त्री) का चिन्तन करने से कदाचित् सनकादि ऋषि का ज्ञान सम्भव क्यों नहीं होता है?॥२९॥

---

1. क ख ग घ च ज झ त थ द ध न – **सदृशार्थानुचिन्तनं तु सदृश०**, छ – **सादृश्यानुचिन्तनं तु सादृश्य०**।

**निद्रारूपं ज्ञानमेवालम्बनं यस्य तत्तथा सर्वजीवेषु विस्मृतात्मकेषु सुषुप्तदृष्टिमच्चित्तमिति यावत्। तदुक्तम्—**

**ब्रह्माद्यं स्थावरान्तं च प्रसुप्तं यस्य मायया।**
**तस्य विष्णोः प्रसादेन यदि कश्चित् प्रमुच्यते ॥**
**चराचरं लय इव प्रसुप्तमिह पश्यताम्।**
**किं मृषा व्यवहारेषु न विरक्तं भवेन्मनः[1] ॥ इति।**

**भाष्यं च सुगमम्॥३८॥**

सूत्रकार पूर्ववत् चित्तस्थैर्य के लिये अन्य 'परिकर्म' को बताते हैं—**'स्वप्नेति।' 'स्वप्न-ज्ञान'** अर्थात् स्वप्नात्मक ज्ञान को आलम्बन बनाने वाला चित्त प्रपञ्चज्ञान में स्वप्न-दृष्टि वाला होता है अर्थात् प्रपञ्चज्ञान को स्वप्नज्ञानवत् (हेयबुद्धिवत्) समझता है। ऐसा ही कहा गया है—**'दीर्घस्वप्नं....चित्तविभ्रमम्'** अर्थात् 'इस सांसारिक प्रपञ्च को दीर्घस्वप्न के समान समझना चाहिये अथवा इसे चित्त का सघन भ्रम मानना चाहिये।' उद्धरण के आशय को स्पष्ट करते हुए योगवार्त्तिककार कहते हैं कि जाग्रत्कालिक ज्ञान में (जागरित अवस्था में) क्षणभंगुरविषयकत्व आदि धर्मों से युक्त जो दृष्टि (चित्त की वृत्ति) होती है, वह उसी प्रकार है जिस प्रकार वाणी में कामदुघत्वादि गुणों से युक्त धेनुदृष्टि की जाती है। इस प्रकार जाग्रद्ज्ञान में स्वप्न-ज्ञान के समान (जागरित अवस्था में अनुभव में आने वाले पदार्थों को स्वप्नज्ञान के विषय के समान मिथ्या मानकर) जो वैराग्यबुद्धि की जाती है, उससे भी चित्त स्थिर होता है, अर्थात् तद्विषयक वैराग्य चित्तस्थैर्य का हेतु है। योगवार्त्तिककार भाष्य के अगले चरण को उठाते हैं—**'निद्राज्ञानालम्बनं वेति।'** निद्रारूप ज्ञान ही है आलम्बन जिसका, ऐसा चित्त विस्मृत (भूले हुए) आत्मस्वरूप वाले सब जीवों में सुषुप्तदृष्टि से युक्त हो जाता है। इस प्रकार निद्राज्ञानालम्बनक चित्त स्थितिपद को प्राप्त करता है। जैसा कि कहा है—**'ब्रह्माद्यं...भवेन्मनः'** (ग. पु. १/१२४/६-७) अर्थात् 'ब्रह्म से लेकर स्थावरपर्यन्त संसार जिसकी मायाशक्ति के द्वारा सुषुप्त (नामरूपादि-रहित) होता है, उस विष्णु भगवान् की अनुकम्पा से ही कोई संसारी जीव मुक्त होता है। यहाँ पर चराचर की प्रसुप्तता को लय के समान ही समझना चाहिये। फिर भी न मालुम किस प्रयोजन से यह मन व्यवहारों में विरक्त नहीं होता है।' सूत्र का भाष्यार्थ तो सरल ही है॥३८॥

---

1. ख — **तेन वसिष्ठादिषु प्रपञ्चस्य स्वप्नादिरूपकं दृष्ट्यर्थमेवोच्यमानमाधुनिका, मोहादेव विज्ञानादि-मतानुसारेण नयन्तीति मन्तव्यम्** (मनः पश्चात्) उपलभ्यते, क ग घ च छ — **तेन...मन्तव्यं** नोपलभ्यते।

### योगसूत्रम्

## [1]यथाभिमतध्यानाद्वा ॥३९॥

जो भी अभीष्ट हो, उसके ध्यान से भी चित्त स्थिर होता है॥३९॥

### व्यासभाष्यम्

**[2]यदेवाभिमतं तदेव ध्यायेत्। तत्र लब्धस्थितिकमन्यत्रापि स्थितिपदं लभत इति॥३९॥**

साधक को जो भी प्रिय (अभीष्ट) हो, उसी का ध्यान करना चाहिये। उस अभीष्ट में स्थिर हुआ चित्त अन्यत्र भी स्थिरता को प्राप्त करता है॥३९॥

### तत्त्ववैशारदी

**यथाभिमतध्यानाद्वा। किं बहुना, यदेवाभिमतं तत्तद्देवतारूपमिति॥३९॥**

'**यथेति**।' अधिक क्या कहा जाय, योगी को ईश्वर का जो भी रूप अभीष्ट हो, उसी का ध्यान करे॥३९॥

### योगवार्त्तिकम्

**यथाऽभिमतध्यानाद्वा। किं बहुना, यदेवाभिमतं हरिहरमूर्त्त्यादिकं तदेवादौ ध्यायेत्, तस्मादपि ध्यानात्तत्र लब्धस्थितिकस्य चित्तस्यान्यत्रापि विवेकपर्यन्तसूक्ष्मेषु विनैव साधनान्तरं स्थितियोग्यता भवतीत्यर्थः। इत्थमेव व्याचष्टे—यदेवेति॥३९॥**

'**यथेति**।' चित्तस्थैर्य के साधनभूत 'परिकर्म' के विषय में अधिक क्या कहा जाय, साधक को जो भी '**अभिमत**' अर्थात् ध्यान की विषयभूत हरिहर आदि मूर्त्ति अभीष्ट हो, उसी का ध्यान करना चाहिये। क्योंकि अपनी रुचि के अनुसार किसी भी ध्येय तत्त्व का ध्यान करने से एकाग्रता को प्राप्त हुआ चित्त विवेकपर्यन्त अन्य सूक्ष्म पदार्थों में भी उपायान्तर की अपेक्षा किये विना ही स्थैर्य को प्राप्त करता है। भाष्यकार इसी तथ्य को कहते हैं—'**यदेवेति**।' ॥३९॥

### योगसूत्रम्

## परमाणु[3]परममहत्त्वान्तोऽस्य वशीकारः॥४०॥

इस परिकर्मित चित्त का 'वशीकार' परमाणु से लेकर परम-महत्पर्यन्त होता है॥४०॥

---

1. **तथा**—इति पाठान्तरम्।
2. **क ख ग घ च ज झ त थ द ध न प फ ब भ म य र — यदेवाभिमतं तदेव ध्यायेत्। तत्र लब्धस्थितिकमन्यत्रापि, छ — यथामहावाक्याभिमतस्य ध्यानान्मायायां मिथ्यायां चित्तम्।**
3. **परम०**—नोपलभ्यते।

## व्यासभाष्यम्

**सूक्ष्मे निविशमानस्य परमाण्वन्तं स्थितिपदं लभत इति। स्थूले निविशमानस्य परममहत्त्वान्तं स्थितिपदं चित्तस्य। एवं तामुभयीं कोटिमनुधावतो योऽस्याप्रतीघातः स परो वशीकारः। तद्वशीकारात्परिपूर्णं योगिनश्चित्तं न पुनरभ्यासकृतं परिकर्मापेक्षत इति॥४०॥**

सूक्ष्म पदार्थ में प्रवेश करते हुए (अवस्थान चाहने वाले) इस योगी का चित्त परमाणुपर्यन्त स्थिर हो जाता है। और स्थूल पदार्थ में प्रवेश करते हुए इस योगी का चित्त परममहत् (आकाश) तक स्थिर हो जाता है। इस प्रकार सूक्ष्मतम और महत्तम सीमाओं का अवगाहन करने वाले योगी के चित्त की जो अप्रतिहत गति होती है, उसे 'परवशीकार' कहते हैं। इस 'परवशीकार' से परिपूर्ण योगी का चित्त पुनः किसी अभ्याससाध्य परिकर्म की अपेक्षा नहीं करता है।

## तत्त्ववैशारदी

**कथं पुनः स्थितिपदमात्मीभावोऽवगन्तव्य इत्यत आह—परमाणुपरममहत्त्वान्तोऽस्य वशीकारः। व्याचष्टे—सूक्ष्म इति। उक्तमर्थं पिण्डीकृत्य वशीकारपदार्थमाह—एवं तामुभयीमिति। वशीकारस्यावान्तरफलमाह—तद्वशीकारादिति॥४०॥**

**शङ्का**—यह कैसे विदित होता है कि चित्त '**स्थितिपद**'=आत्मीभाव अर्थात् ध्येय विषय की एकतानता को प्राप्त हो गया है?

**समाधान**—इस पर सूत्रकार कहते हैं—'**परमाण्विति।**' भाष्यकार (लब्धस्थितिक चित्त के आलम्बन के उत्कर्ष=पर्यवसान का) विवरण करते हैं—'**सूक्ष्म इति।**' सूक्ष्म तथा स्थूल दोनों प्रकार के विषयों को एकत्रित करते हुए भाष्यकार वशीकार का स्वरूप बतलाते हैं—'**एवं तामुभयीमिति।**' भाष्यकार वशीकार के अवान्तरफल को प्रदर्शित करते हैं—'**तद्वशीकारादिति।**' इस प्रकार तत्त्ववैशारदीकार ने प्रकृत सूत्र के भाष्य के तीन वाक्यों द्वारा क्या-क्या प्रतिपादित हो रहा है, इस ओर इंगित मात्र किया है॥४०॥

## योगवार्त्तिकम्

**परिकर्मनिष्पत्ते[1]र्लक्षणमाह—परमाणुपरममहत्त्वान्तोऽस्य वशीकारः। अस्य=परिकर्मितचेतसः;[2] परमं महत्त्वं येषां पुरुषादीनां ते परममहत्त्वाः। व्याचष्टे—सूक्ष्म इति।[3]**

1. ख – **फलरूप०** (**निष्पत्तेः** पश्चात्) उपलभ्यते, क ग घ च छ – **फलरूप०** नोपलभ्यते।
2. क – **परिकर्मनिष्पत्तेः** (**चेतसः** पश्चात्) उपलभ्यते, ख ग घ च छ – **परिकर्मनिष्पत्तेः** नोपलभ्यते।
3. क ख ग घ – **सूक्ष्म इति** उपलभ्यते, च छ – **सूक्ष्म इति** नोपलभ्यते।

**सूक्ष्मेऽल्पपरिमाणे चित्तस्य निवेशनमवस्थानमभीप्सोरित्यर्थः। लभते योगीति शेषः। स्थूल इति। स्थूले [1]महत्परिमाणे। अन्यत् पूर्ववत्। एवं तामिति। एतत् [2]स्थूलसूक्ष्मरूपं कोटिद्वयं पक्षद्वयं [3]चरतोऽस्य चित्तस्य योऽप्रतिघातः केनाप्यप्रतिबद्धता स वशीकारश्चित्तस्य विधेयत्वं भवतीत्यर्थः। परशब्दादपरोऽपि वशीकारोऽस्ति दोषदर्शनजन्यो वशीकारसंज्ञारूप इति भावः। तदपेक्षयाऽस्य परत्वे हेतुमाह–तद्वशीकारादिति। तस्माद्वशीकारात्परिपूर्णं समाप्तस्थैर्यसाधना-काङ्क्षं चित्तमभ्यासान्तरसाध्यं परिष्कारं नापेक्षत इत्यर्थः। वशीकारसंज्ञावैराग्यानन्तरमपि तु चित्तमभ्यासकृतं वशीकारमपेक्षत एवेति तदपरं निकृष्टमिति भावः॥४०॥**

सूत्रकार '**परिकर्म**' की परिपक्वता का लक्षण करते हैं–**परमाण्विति**। '**अस्य**' अर्थात् '**परिकर्म**' द्वारा लब्धस्थितिक चित्त को परमाणु से लेकर परममहत्त्वपर्यन्त पदार्थ वशीकृत होते हैं। '**परममहत्त्व**' का विग्रह है–'**परमं महत्त्वं येषां पुरुषादीनां ते परममहत्त्वाः**' अर्थात् जिन पुरुषादिकों का परममहत् परिमाण है, उन्हें '**परममहत्त्व**' कहते हैं। भाष्यकार सूत्र की व्याख्या करते हैं–'**सूक्ष्म इति**।' '**सूक्ष्म**' अर्थात् अल्पतम परिमाण वाले पदार्थ में '**निवेशन**' अर्थात् अवस्थान की इच्छा रखने वाले योगी को उस पदार्थ में स्थिरता प्राप्त होती है। '**स्थूल इति**।' इसी प्रकार '**स्थूल**' अर्थात् परममहत् परिमाण वाले पदार्थ में भी चित्त की स्थिरता समझनी चाहिये। योगवार्त्तिककार आगे के भाष्य को उठाते हैं–'**एवं तामिति**।' इस प्रकार स्थूलकोटिक और सूक्ष्मकोटिक द्विपक्षीय पदार्थों की ओर सञ्चरण (अनुशीलन) करने वाले योगी के चित्त का जो '**अप्रतिघात**' अर्थात् किसी भी कारण से गतिरुद्ध न होना है, वही चित्त का '**वशीकार**' कहलाता है। भाष्यकार ने इसे '**परवशीकार**' शब्द से इंगित किया है। अतः योगवार्त्तिककार तथ्य को स्पष्ट करते हुए कहते हैं कि यहाँ 'पर' शब्द से यह ध्वनित होता है कि एक '**अपरवशीकार**' भी है, जो दोषदर्शन से जायमान (अपर) '**वशीकार**' संज्ञक है। भाष्यकार दोषदर्शनजन्य अपरवशीकार की तुलना में प्रकृत वशीकार के '**परत्व**' (पररूप होने) में कारण बताते हैं– '**तद्वशीकारादिति**।' परवशीकार की प्राप्ति से 'परिपूर्ण' अर्थात् चित्त की स्थिरता के उपायान्तर से निराकांक्ष योगी का चित्त पुनः किसी अन्य अभ्याससाध्य '**परिकर्म**' की अपेक्षा नहीं करता है। किन्तु '**अपरवशीकार**' संज्ञक वैराग्य के अनन्तर अभ्यासकृत चित्त '**परवशीकार**' की अपेक्षा करता ही है। इसलिये '**परवशीकार**' की तुलना में यह '**अपरवशीकार**' गौण है अर्थात् तदपेक्षया पूर्वकोटिक है॥४०॥

सम्प्रति, भाष्यकार अगले सूत्र को अवतरित करते हैं–

---

1. क ग घ – **महत्**, ख च छ – **महा०**।
2. क ख ग – **सूक्ष्मस्थूल०**, घ च छ – **स्थूलसूक्ष्म०**।
3. क ख ग घ – **सञ्चरतः**, च छ – **चरतः**।

व्यासभाष्यम्

**अथ लब्धस्थितिकस्य चेतसः किं [1]स्वरूपा किंविषया वा समापत्तिरिति? तदुच्यते—**

(पूर्णवर्णित परिकर्मों द्वारा) स्थिरता को प्राप्त हुए चित्त को जो 'समापत्ति' प्राप्त होती है, उसका क्या स्वरूप है और वह किस विषय वाली होती है? (उत्तर है)—

योगसूत्रम्

## क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः॥४१॥

जिस प्रकार शुद्ध स्फटिक आश्रय के अनुसार विभिन्न रूपों को प्राप्त करता है, उसी प्रकार क्षीणवृत्तिक चित्त की ग्रहीता, ग्रहण और ग्राह्य में जो तत्स्थितता और तदञ्जनता होती है, उसे 'समापत्ति' कहते हैं॥४१॥

व्यासभाष्यम्

**क्षीणवृत्तेरिति प्रत्यस्तमितप्रत्ययस्येत्यर्थः। अभिजातस्येव मणेरिति दृष्टान्तोपादानम्। यथा स्फटिक उपाश्रयभेदात्तत्तद्रूपोपरक्त उपाश्रय[2]रूपाकारेण निर्भासते तथा ग्राह्यालम्बनोपरक्तं चित्तं ग्राह्यसमापन्नं ग्राह्य[3]स्वरूपाकारेण निर्भासते। तथा[4] भूतसूक्ष्मोपरक्तं [5]भूतसूक्ष्मसमापन्नं भूतसूक्ष्मस्वरूपाभासं भवति। तथा स्थूलालम्बनोपरक्तं स्थूलरूपसमापन्नं स्थूलरूपाभासं भवति। तथा विश्वभेदोपरक्तं विश्वभेदसमापन्नं विश्वरूपाभासं भवति। तथा ग्रहणेष्वपीन्द्रियेष्व[6]पि द्रष्टव्यम्। ग्रहणालम्बनोपरक्तं ग्रहणसमापन्नं ग्रहणस्वरूपाकारेण निर्भासते। तथा ग्रहीतृपुरुषालम्बनोपरक्तं ग्रहीतृपुरुषसमापन्नं ग्रहीतृपुरुषस्वरूपाकारेण निर्भासते। तथा मुक्तपुरुषा-**

---

1. क ख ग घ च छ ज झ त थ द ध न फ ब भ म य र – स्वरूपा, प – रूपा।
2. क ख ग घ च छ ज त थ द द न प फ ब भ म य र – रूपाकारेण, झ – जपाकारेण।
3. क ग – रूपा०, ख घ च छ ज झ त थ द ध न प फ ब भ म य र – स्वरूपा०।
4. क ख ग च छ ज झ त थ द ध न भ म प – तथा उपलभ्यते, घ प फ ब र – तथा नोपलभ्यते।
5. क ख ग घ च छ ज झ त थ द ध न प फ ब भ य र – भूतसूक्ष्मसमापन्नं उपलभ्यते, म – भूतसूक्ष्मसमापन्नं नोपलभ्यते।
6. घ प फ ब य र – अपि उपलभ्यते, क ख ग च छ। च झ त थ द ध न भ म – अपि नोपलभ्यते।

लम्बनोपरक्तं मुक्तपुरुषसमापन्नं मुक्तपुरुषस्वरूपाकारेण निर्भासत इति। तदेवमभिजातमणिकल्पस्य चेतसो ग्रहीतृग्रहणग्राह्येषु पुरुषेन्द्रियभूतेषु या तत्स्थतदञ्जनता तेषु स्थितस्य तदाकारापत्तिः सा समापत्तिरित्युच्यते॥४१॥

'क्षीणवृत्तेः' पद का अर्थ है–वृत्त्यन्तररहित चित्तवृत्ति का। 'अभिजातस्येव मणेः' सूत्रांश से दृष्टान्त उपस्थित किया गया है। जिस प्रकार (स्वच्छ) स्फटिकमणि जपाकुसुमरूप उपाधि के (लाल, नीले, पीले आदि वर्ण के) भेद से तदाकाराकारित (कान्तिसम्पन्न) होकर तद्रूप में भासित (प्रकाशित) होती है। उसी प्रकार चित्त भी ग्राह्य (विषय) रूप आलम्बन से उपरञ्जित होकर ग्राह्यभाव को प्राप्त होता हुआ तदाकार में भासित होता है। वैसे ही भूतसूक्ष्मों से उपरक्त चित्त भूतसूक्ष्माकार होकर भूतसूक्ष्मरूप का प्रतीत होता है। इसी प्रकार स्थूलभूतरूप उपाधि से उपरञ्जित चित्त स्थूलभूत के आकार को प्राप्त होकर स्थूलभूत के आकार के आभास वाला होता है। वैसे ही विश्वभेद से उपरञ्जित चित्त तदाकाराकारित होकर तद्रूप में प्रतीत होता है। ग्रहणरूप (विषयों को ग्रहण करने वाली) इन्द्रियों में भी (तदाकारापत्ति का) उक्त सिद्धान्त चरितार्थ होता है। अर्थात् ग्रहण (इन्द्रिय) रूप आलम्बन से उपरक्त (रंजित) हुआ चित्त ग्रहणभावता को प्राप्त होकर तद्रूप से भासित होता है। इसी भाँति ग्रहीता पुरुषरूप आलम्बन से उपरक्त होता हुआ, ग्रहीतृपुरुषाकार को प्राप्त होकर ग्रहीता पुरुष के आकार से चित्त भासित होता है। इसी प्रकार मुक्त पुरुषरूप आलम्बन से उपरक्त होता हुआ मुक्त पुरुषाकार को प्राप्त होकर मुक्त पुरुष के आकार का प्रतीत होता है। निष्कर्षतः स्वच्छ स्फटिकमणि के समान चित्त की 'ग्रहीतृ', 'ग्रहण' तथा 'ग्राह्य' नामक पुरुष, इन्द्रिय तथा भूत पदार्थों में जो तत्स्थ तदञ्जनता अर्थात् तदाकारापत्ति होती है, उसे 'समापत्ति' कहते हैं॥४१॥

### तत्त्ववैशारदी

**तदेवं चित्तस्थितेरुपाया दर्शिताः। लब्धस्थितिकस्य चित्तस्य[1] वशीकारोऽपि दर्शितः। संप्रति लब्धस्थितिकस्य चेतसः किंविषयः किंरूपश्च संप्रज्ञातो भवतीति पृच्छति–अथेति। अत्रोत्तरसूत्रमवतारयति–तदुच्यत इति। सूत्रं पठति–क्षीणवृत्तेरित्यादि समापत्त्यन्तम्। तद्व्याचष्टे–क्षीणेति। अभ्यासवैराग्याभ्यां क्षीणराजसतामसप्रमाणादिवृत्तेश्चित्तस्य। तस्य व्याख्यानम्–प्रत्यस्तमितप्रत्ययस्येति। तदनेन चित्तसत्त्वस्य स्वभावस्वच्छस्य रजस्तमोभ्याम[2]नभिभव उक्तः। दृष्टान्तं स्पष्टयति–यथेति। उपाश्रयः उपाधिर्जपाकुसुमादिः। उपरक्तस्तच्छायापन्नः।**

1. क ख ग घ च छ ज झ त न – चित्तस्य उपलभ्यते, थ द ध – चित्तस्य नोपलभ्यते।
2. क ख ग घ च छ ज झ त द – अनभिभवः, थ ध न – अभिभवः।

**उपाश्रयस्य यदात्मीयं रूपं लोहितनीलादि तदेवाकारस्तेन लक्षितो निर्भासते। दार्ष्टान्तिके योजयति—तथा ग्राह्येति। ग्राह्यं च तदालम्बनं च तेनोपरक्तं तदनुबिद्धम्। तदनेन ग्रहीतृ-ग्रहणाभ्यां व्यवच्छिनत्ति। आत्मीयमन्तःकरणरूपमपिधाय ग्राह्यसमापन्नं ग्राह्यतामिव प्राप्तमिति यावत्। अतो ग्राह्यस्वरूपाकारेण निर्भासते। ग्राह्योपरागमेव [1]सूक्ष्मस्थूलताभ्यां विभजते—भूतसूक्ष्मेति। विश्वभेदश्चेतनाचेतनस्वभावो गवादिर्घटादिश्च द्रष्टव्यः। तदनेन वितर्कविचारा-नुगतौ समाधी दर्शितौ।**

इस प्रकार चित्तस्थैर्य के उपाय बताये गये तथा स्थितिप्राप्त चित्त का (स्थूल-सूक्ष्मविषयक) '**वशीकार**' भी प्रदर्शित किया गया। अधुना, स्थितिप्राप्त (स्थैर्य) चित्त को किस ध्येय विषय वाली और किस स्वरूप वाली सम्प्रज्ञात समाधि प्राप्त होती है? ऐसा भाष्यकार पूछते हैं—'**अथेति**।' भाष्यकार उक्त शंका के उत्तर में अग्रिम सूत्र को अवतरित करते हैं—'**तदुच्यत इति**।' तदर्थ '**क्षीणवृत्तेः**' से लेकर '**समापत्तिः**' पर्यन्त सूत्र को पढ़ा जाता है। भाष्यकार सूत्रार्थ करते हैं—'**क्षीणेति**।' अभ्यास और वैराग्य के द्वारा जिस चित्त की राजस और तामस वृत्तियाँ क्षीण हो चुकी हैं, उस चित्त को '**क्षीणवृत्ति**' कहते हैं। ऐसे क्षीणवृत्तिक चित्त का स्वरूप है—'**प्रत्यस्तमितप्रत्ययस्येति**।' इससे स्वभावतः निर्मल चित्तसत्त्व की रजोगुण एवं तमोगुणरूप मलिनता की अभि-भूतता अर्थात् धूमिलता बताई गई है। अर्थात् राजस तथा तामसवृत्तिशून्य चित्त को स्वच्छ स्फटिकमणि से उपमित करते हुए उसके लब्धस्थितिक स्वरूप को आलम्बन सहित स्पष्ट किया गया है। भाष्यकार अभिजात मणिरूप उदाहरण को स्पष्ट करते हैं—'**यथेति**।' उदाहृत स्फटिक में जपाकुसुमादि उपाधिरूप हैं। इस प्रकार '**उपाश्रय**' शब्द का अर्थ है—उपाधिभूत जपाकुसुमादि। '**उपरक्त**' पद का अर्थ है—तत्प्रतिबिम्बा-कारता। जपाकुसुमादिरूप उपाधि (उपाश्रय) का रक्त, नीलादिरूप जो अपना आकारविशेष होता है, उसी रूपविशेष से प्रतिबिम्बाधारभूत स्फटिक निर्भासित होता है अर्थात् जपाकुसुमरूप उपाधि के सन्निधान से उपधेयभूत स्फटिक जपा-कुसुमीय रक्तिमता से तदाकारापन्न हो जाता है। भाष्यकार दृष्टान्त को दार्ष्टान्त में अन्वित करते हैं—'**तथा ग्राह्येति**।' यहाँ '**ग्राह्य**' शब्द का अर्थ '**आलम्बन**' है। इस प्रकार चित्त ग्राह्यरूप '**आलम्बन**' से '**उपरक्त**' अर्थात् अनुबिद्ध (तदाकारापन्न) होता है। '**ग्राह्य**' शब्द के प्रयोग से चित्त की ग्राह्यानुबिद्धता को '**ग्रहीतृ**' और '**ग्रहण**' रूप विषय की उपरक्तता से पृथक् किया गया है। तात्पर्य यह है कि अपने अन्तःकरणीय रूप (अन्तःकरणत्वधर्म) को छिपाकर चित्त ग्राह्यसमापन्न अर्थात् ग्राह्यता को प्राप्त हुआ सा हो जाता है। अतः चित्त ग्राह्य विषय के आकार से भासित होता है। भाष्यकार

---

1. क छ त – **सूक्ष्मं स्थूलं च ताभ्यां**, ख ग घ च ज झ थ द ध न – **सूक्ष्मस्थूलताभ्याम्।**

भासित होता है। भाष्यकार ग्राह्योपरक्त चित्त की ग्राह्यविषयता का सूक्ष्म और स्थूल की दृष्टि से विभाजन करते हैं–'**भूतसूक्ष्मेति**।' विश्वप्रपञ्च चेतन तथा अचेतन स्वभाव वाला है। 'गवादि' चेतन हैं तथा 'घटादि' अचेतन हैं। सूत्रकार ने '**ग्राह्यसमापत्ति**' से वितर्कानुगत तथा विचारानुगत योग (सम्प्रज्ञात के दो भेदों) को गृहीत किया है। अर्थात् स्थूल- विषयक '**वितर्क**' तथा सूक्ष्मविषयक '**विचार**'–सम्प्रज्ञात के ये दोनों भेद '**ग्राह्यसमापत्ति**' के अन्तर्गत आते हैं।

**बालप्रिया–**

'**तथा ग्राह्योपरक्तम्**'–यद्यपि सूत्रकार ने '**ग्रहीतृग्रहणग्राह्येषु**' द्वारा ग्रहीतृ, ग्रहण और ग्राह्य के क्रम से चित्तालम्बन को इंगित किया है तथापि योगसाधना की दृष्टि से भाष्यकार ने ग्राह्यविषयक समापत्ति को सर्वप्रथम प्रतिपादित किया है। तदनन्तर ग्रहणविषयक तथा अन्त में ग्रहीतृविषयक समापत्ति को वर्णित किया है। सूत्रकार द्वारा पठित क्रम में चित्त की '**ग्रहीतृ**' विषय की तदञ्जनता को मुख्य रूप से स्पष्ट करने का लक्ष्य है। तत्पश्चात् चित्त की '**ग्रहण**' और '**ग्राह्य**' विषयक तदञ्जनता के स्पष्टीकरण कर प्रश्न उठता है। वस्तुतस्तु '**ग्रहीतृ**' आदि विषय के स्पष्टीकरण तथा साधना-क्रम से '**ग्राह्य**' आदि विषय के ग्रहण की दृष्टि से सूत्रकार तथा भाष्यकार में परिलक्षित उक्त अन्तर से सिद्धान्त की एकरूपता को व्याघात नहीं पहुँचता है।

'**ग्राह्योपरागमेव सूक्ष्मस्थूलताभ्यां विभजते**'–सूक्ष्म विषय '**तन्मात्र**' है और स्थूल विषय '**महाभूत**' है। इन दोनों में कार्यकारणभाव सम्बन्ध है। स्थूलभूत का कारण सूक्ष्मतन्मात्र तथा सूक्ष्मतन्मात्र का कार्य स्थूलभूत है। स्थूलग्राह्य की संख्या पाँच तक ही सीमित नहीं है। यह तो गोघटादि विश्वभेद का भी अपने में समावेश करता है। अन्तर केवल इतना है कि जैसे तन्मात्र, महाभूत का 'तत्त्वान्तरोपादान' कारण है, वैसे महाभूत, गोघटादि का 'तत्त्वान्तरोपादान' कारण नहीं है।

सम्प्रति, तत्त्ववैशारदीकार द्वितीय '**ग्रहणसमापत्ति**' का प्रतिपादन करते हैं–

तत्त्ववैशारदी

**तथा ग्रहणेष्वपीन्द्रियेष्विति। गृह्यन्त एभिरर्था इति ग्रहणानीन्द्रियाणि। एतदेव स्पष्टयति– ग्रहणालम्बनेति। ग्रहणं चालम्बनं च तदिति ग्रहणालम्बनम्। तेनोपरक्तमनुबिद्धमात्मीयमन्तःकरणरूपमपिधाय ग्रहणमिव बहिष्करणमिवापन्नमिति। तदनेनानन्दा[1]नुगतमुक्त्वाऽस्मितानुगतमाह–तथा ग्रहीतृपुरुषेति। अस्मितास्पदं हि ग्रहीता पुरुष इति भावः। पुरुषत्वाविशेषादनेनैव मुक्तोऽपि पुरुषः शुकप्रह्लादादिः समाधिविषयतया संग्रहीतव्य इत्याह–तथा मुक्तेति।**

1. क छ त – अनुगतिं, ख ग घ च ज झ थ द ध न – अनुगतम्।

भाष्य की पंक्ति है–'**तथा ग्रहणेष्वपीन्द्रियेष्विति।**' '**गृह्यन्त एभिरर्थाः** व्युत्पत्ति के अनुसार इनके द्वारा पदार्थ गृहीत होते हैं, इसलिये इन्द्रियों को '**ग्रहण**' कहते हैं। इसी को भाष्यकार स्पष्ट करते हैं–'**ग्रहणालम्बनेति।**' '**ग्रहणं चालम्बनं च तदिति 'ग्रहणालम्बनम्**' अर्थात् ग्रहणरूप इन्द्रियाँ ही जहाँ आलम्बन (विषय) बनती हैं, उसे '**ग्रहणालम्बन**' कहते हैं। इस प्रकार ग्रहणात्मक इन्द्रियरूप विषय से युक्त चित्त अपने अन्तःकरणरूप को तिरोहित करके बाह्यकरणभाव को प्राप्त हुआ सा प्रतीत होता है। चित्त की इस ग्रहणरूप विषयता से आनन्दानुगत सम्प्रज्ञातयोग को बतलाकर भाष्यकार (क्रमप्राप्त) अस्मितानुगत सम्प्रज्ञात को बतलाते हैं–'**तथा ग्रहीतृपुरुषेति।**' यहाँ '**ग्रहीतृ**' पद से अस्मितास्पद अर्थात् अहंकारविशिष्ट पुरुष का ग्रहण होता है। 'पुरुषत्व' की दृष्टि से समानता होने से '**ग्रहीतृ**' शब्द से शुक, प्रह्लादादि मुक्त पुरुष भी समाधि के विषय रूप से गृहीत होते हैं। इसी तथ्य को भाष्यकार बतलाते हैं–'**तथा मुक्तेति।**'

**बालप्रिया–**

'**अस्मितास्पदं ग्रहीता पुरुषः**'–भाष्यकार ने ग्रहीतृसमापत्ति को '**ग्रहीतृपुरुषालम्बनोपरक्तं**' पद द्वारा बतलाया है। किन्तु अहंकारविशिष्ट हुए विना पुरुष का 'ग्रहीतृ'रूप सम्भव नहीं है, क्योंकि पुरुष अविषय है। इसीलिये तत्त्ववैशारदीकार ने कहा है कि '**ग्रहीतृ**' पद से '**अहंकारविशिष्ट पुरुष**' विवक्षित है। शुक, प्रह्लाद आदि मुक्त पुरुष-विषयक समापत्ति को भी उनके शरीर से विशिष्ट ही समझना चाहिये।

ग्राह्य, ग्रहण तथा ग्रहीतृसमापत्ति को बतलाने के पश्चात् तत्त्ववैशारदीकार '**समापत्ति**' पद के अर्थ को स्पष्ट करते हैं–

**तत्त्ववैशारदी**

**उपसंहरंस्तत्स्थतदञ्जनतापदं व्याचष्टे–तदेवमिति। तेषु गृहीतृग्रहणग्राह्येषु, स्थितस्य धारितस्य ध्यानपरिपाकवशादपहतरजस्तमोमलस्य चित्तसत्त्वस्य या तदञ्जनता=तदाकारता, सा समापत्तिः संप्रज्ञातलक्षणो योग उच्यते। तत्र च ग्रहीतृग्रहणग्राह्येष्विति सौत्रः पाठक्रमोऽर्थक्रम[1]विरोधान्नादर्तव्यः। एवं भाष्येऽपि प्रथमं भूतसूक्ष्मोपन्यासो[2]ऽपि नादरणीय इति सर्वं रमणीयम्॥४१॥**

विषय का उपसंहार करते हुए भाष्यकार सूत्रस्थ '**तत्स्थतदञ्जनता**' पद की व्याख्या करते हैं–'**तदेवमिति।**' ध्यान के परिपाक से राजस तथा तामस मलरहित एकाग्र चित्त की ग्रहीतृ, ग्रहण तथा ग्राह्य विषयों में जो तदञ्जनता अर्थात् तदाकारता होती है,

---

1. क ख ग घ च छ ज झ त थ द ध – **विरोधात्**, न – **अविरोधात्।**
2. क ग च छ थ द ध – **अपि** उपलभ्यते, ख घ ज झ त न – **अपि** नोपलभ्यते।

उसे समापत्ति अर्थात् सम्प्रज्ञात योग' कहते हैं। '**ग्रहीतृग्रहणग्राह्येषु**'–यह सौत्र पाठक्रम अर्थक्रम के विरुद्ध होने से अनादरणीय अर्थात् उपेक्षणीय है। इसी प्रकार भाष्य में भी ग्राह्यविषयक समापत्ति बताते समय स्थूलभूतालम्बन से पूर्व भूतसूक्ष्म (तन्मात्र) विषयक समापत्ति का प्रस्तुतीकरण अपेशल अर्थात् अयुक्त है॥४१॥

**बालप्रिया**–

'**तदञ्जनता तदाकारता**'–चित्त के विषयाकारित होने पर ही उसे घटज्ञान होता है। इसी प्रकार चित्त की ग्राह्यविषयाकारता को '**ग्राह्यसमापत्ति**' कहते हैं। जिज्ञासा है कि जब दोनों में चित्त की विषयरूपता (पदार्थरूपापत्ति) समान रूप से देखी जाती है, तब दोनों में अन्तर क्या है? उत्तर यह है कि राजस तथा तामसवृत्ति के प्रभाव से लौकिक ज्ञान की दशा में आंशिक तद्रूपापत्ति होती है और समापत्तिकाल की तद्रूपापत्ति में सम्यग्रूपता (पूर्णता) होती है, क्योंकि राजस और तामस वृत्तियाँ सर्वथा निरुद्ध हो जाती हैं। इस प्रकार निरापद '**तदञ्जनता**' का नाम ही '**समापत्ति**' है॥४१॥

## योगवार्त्तिकम्

**तदेवमभ्यासवैराग्यादिकं परिकर्मान्तं योगसाधनमभिहितं सामान्यतो योगद्वितयं च प्रोक्तमतः परं योगयोः फलं वक्तव्यं, तत्रादौ संप्रज्ञातस्य फलं ध्यानादिव्यावृत्तं प्रतिपादयन्सूत्रमवतारयति–अथेति।** अथशब्दः प्रश्ने। **समापत्तिः सम्यगालम्बनाकारत्वापत्तिः प्रत्यक्षवृत्तिरित्यर्थः। चित्तस्य चेयं प्रज्ञाऽऽख्यावस्था संप्रज्ञातेष्वेव भवति न तु धारणाध्यानसमाधिषु, तेषु सामग्र्येणालम्बनाग्रहणात् साक्षात्कारस्यैव विशेषाकारत्वादिति। क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः। क्षीणवृत्तेरपगतवृत्त्यन्तरस्य चित्तस्येत्यर्थः। अभिजातस्य निर्मलस्य मणेरिव ग्रहीत्रादिषु तत्स्थिततया तदञ्जनता सम्यक्तदाकारता जायते, सा च समापत्तीति शब्दवाच्या भवतीत्यर्थः। अत्र संप्रज्ञातफलभूतायाः प्रज्ञायाः समापत्तिरिति तान्त्रिकी परिभाषाऽपि प्रसङ्गादुक्ता, सा चासंप्रज्ञात[1]व्यावृत्तस्य संप्रज्ञातस्वरूपस्य [2]परिचायकं तस्यैव संप्रज्ञातयोग इति पश्चाद्वक्ष्यते ता एव सबीजः समाधिरिति सूत्र इति। क्षीणवृत्तेरिति हेतुगर्भविशेषणस्यायमाशयः चित्तस्य स्वत** एव **सर्वार्थसाक्षात्कारसामर्थ्यमस्ति; विषयान्तरव्यासङ्गदोषादेव तु तत्प्रतिबद्धमतो वृत्त्यन्तरप्रतिबन्धस्य निःशेषतोऽपगमे स्वत एव ध्येयवस्तुसाक्षात्कारस्तद्रूपापत्त्याख्यो भवतीति।**

इस प्रकार अभ्यास-वैराग्यादि से लेकर परिकर्मपर्यन्त योग के साधनों को बतलाया गया तथा सामान्यरूप से दो प्रकार के योग का प्रतिपादन किया गया,

1. क ख घ च छ – व्यावृत्तस्य, ग – स्वरूपस्य।
2. क ख ग घ – परिचायकतयैव, च छ – परिचायकं तस्यैव।

अब यहाँ से दोनों प्रकार के योगों का फल बतलाना चाहिये। इनमें से सम्प्रज्ञात योग के ध्यानादिभिन्न फल को प्रतिपादित करते हुए भाष्यकार सूत्र को सर्वप्रथम अवतरित करते हैं–'**अथेति**।' भाष्य में प्रयुक्त '**अथ**' शब्द प्रश्नपरक है। '**समापत्ति**' शब्द का अर्थ है–सुष्ठुरूपेण विषयाकारी प्रत्यक्षवृत्ति। सम्प्रज्ञात के भेदों में ही चित्त की यह विशिष्ट प्रज्ञात्मक अवस्था होती है, न कि अष्टाङ्गवर्ती धारणा, ध्यान तथा समाधि की अवस्थाओं में, क्योंकि धारणादि में समग्ररूप से विषय (आलम्बन) का ग्रहण नहीं होता है। इसीलिये विशिष्ट प्रत्यक्षात्मक अवस्था में ही विशेषाकारापत्तित्व को स्वीकार किया गया है। इसे ही प्रकृत में '**समापत्ति**' शब्द से अभिहित किया गया है। सूत्र है–'**क्षीणवृत्तेरिति**।' '**क्षीणवृत्ति**' अर्थात् विषयान्तर सञ्चरणाभावविशिष्ट चित्त की '**अभिजात**' अर्थात् स्वच्छ (मालिन्यरहित) स्फटिक-मणि की भाँति ग्रहीत्रादियों ('ग्रहीतृ' आदि आलम्बनों) में '**तत्स्थता**' अर्थात् अवस्थिति होने से जो '**तदञ्जनता**' अर्थात् सम्यक्रूपेण ध्येयाकारता होती है, वही '**समापत्ति**' शब्द का वाच्य है। इस प्रकार यहाँ सम्प्रज्ञात की फलभूता प्रज्ञा की तान्त्रिकी परिभाषा '**समापत्ति**' को भी प्रसङ्गतः बतला दिया गया है। और यह संज्ञा (परिभाषा) असम्प्रज्ञात से भिन्न सम्प्रज्ञात के स्वरूप की परिचायिका है। आगामी '**ता एव सबीजः समाधिः**' १/४६ सूत्र में इसी समापत्ति को 'सम्प्रज्ञात योग' कहा जायेगा। '**क्षीणवृत्तेरिति**' इस हेतुगर्भविशेषणपद का आशय यह है–चित्त में स्वतः ही (नैसर्गिकरूप से) समस्त पदार्थों का साक्षात्कार करने की क्षमता (शक्ति) निगूढ़ है, किन्तु ध्येयातिरिक्त पदार्थों में होने वाली आसक्ति के कारण अथवा विषयान्तरगामी होने के कारण चित्त की यह शक्ति अवरुद्ध हो जाती है। अतः विषयान्तरसञ्चरणरूप प्रतिबन्ध का पूर्णरूप से नाश होने पर चित्त स्वतः ही ध्येय पदार्थ का साक्षात्कार करता है अर्थात् वह तद्रूपापत्त्याख्य प्रज्ञात्मक प्रत्यक्षवृत्ति वाला होता है।

सूत्रगत '**क्षीणवृत्तेः**' पद की स्वोद्भावित व्याख्या करने के पश्चात् योगवार्त्तिककार भाष्य के अनुसार इस पद की व्याख्या करते हैं–

**योगवार्त्तिकम्**

**भाष्ये–प्रत्यस्तमितेति। प्रत्ययस्य प्रत्ययान्तरस्येत्यर्थः, समापत्तेरपि प्रत्ययत्वात्। उत्पत्तिक्रमानुरोधेन सौत्रं पाठक्रममुल्लङ्घ्य ग्राह्यादिसमापत्तीः सदृष्टान्ता व्याख्यानायादौ स्वयं विवृणोति– यथेति। उपाश्रयभेदाज्जपाकुसुमाद्युपाधिविशेषात्तद्रूपोपरक्तस्तत्प्रतिबिम्बोद्ग्राही सन् स्फटिक उपाधितुल्याकारतयैव निर्भासते प्रतीयते तथा [1]ग्राह्येणालम्बनेनोपरक्तं**

**समर्पितप्रतिबिम्बं वृत्तेः प्रत्यक्षरूपतालाभाय ग्राह्यसमापन्नमिति ग्राह्यगतविशेषाकारमित्यर्थकमेवं भूतं चित्तं ग्राह्यान्यूनाकारेणैव साक्षिणि निर्भासत इत्यर्थः। [1]तत्र समापत्तिरूपस्य प्रत्यक्षस्य प्रामाण्याय ग्राह्यरूपाकारेणै[2]व साक्षिणि निर्भासत इत्यनेन तत्फलमुक्तं पौरुषेयबोधस्यैव प्रमाणफलत्वादिति। एवं सर्वत्र। ग्राह्यसमापत्ताववान्तरं त्रैविध्यमाह–भूतेति। अत्र भूतसूक्ष्मशब्देन तन्मात्रादिप्रकृतिपर्यन्तं गृहीतम्। सूक्ष्मशब्दस्य [3]कारणार्थतया [4]नात्रेन्द्रियग्रहणम्। स्थूलशब्देन च महाभूतानि गृहीतानि। विश्वभेदशब्देन च स्थावरजङ्गमादयोऽवान्तरभेदा ग्राह्याः। [5]अन्यत् पूर्ववत्।**

भाष्य में कहा गया है–'**प्रत्यस्तमितेति**।' यहाँ '**प्रत्यय**' शब्द का अर्थ है–प्रत्ययान्तर। प्रत्ययान्तरशून्य (ध्येयान्तरशून्य) अर्थात् क्षीणवृत्तिक चित्त की होने वाली समापत्ति भी 'प्रत्यय' रूप है। (क्योंकि क्रिया-क्रियावान् में अभेद विवक्षित है)। उत्पत्ति-क्रमानुसार (समापत्ति में होने वाले तत्तद् विषयों के साक्षात्कार के क्रम से) सूत्र में निर्दिष्ट विषयसाक्षात्कार के (ग्रहीत्रादि) क्रम का व्यतिक्रम (विपरीत क्रम) करके उदाहरणसहित ग्राह्यादि-समापत्ति की व्याख्या करने के लिये भाष्यकार प्रथमतः तथ्य को उद्घाटित करते हैं–'**यथेति**।' 'जिस प्रकार **भेद**' अर्थात् जपाकुसुमादि उपाधिविशेष के भेद से '**तद्रूपोपरक्त**' अर्थात् तत्तद् उपाधिभूत जपाकुसुमादि के प्रतिबिम्ब को ग्रहण करता हुआ स्फटिक उपाधि के (रक्तादि) आकार से ही निर्भासित अर्थात् प्रतीत होता है उसी प्रकार ग्राह्यरूप आलम्बन से '**उपरक्त**' अर्थात् वृत्तिरूप से समर्पित प्रतिबिम्ब वाला होकर, विषयगत प्रत्यक्षता की प्राप्ति के लिये '**ग्राह्यरूपसमापत्तिता**' अर्थात् ग्राह्यगत विशेषाकार विषय वाला होकर चित्त साक्षी पुरुष में ग्राह्य के सम्पूर्ण (अन्यून) आकार से ही अवभासित होता है। यहाँ समापत्तिरूप प्रत्यक्ष के प्रामाण्य के लिये चित्त ग्राह्यरूपाकार से भासित होता है, इसके द्वारा समापत्ति का फल बताया गया है, क्योंकि पौरुषेयबोध ही प्रमाण का फल कहा गया है। इसी प्रकार '**ग्रहणसमापत्ति**' और '**ग्रहीतृसमापत्ति**' को समझना चाहिये। भाष्यकार ग्राह्यसमापत्ति की (विषयगत) त्रिविधता को बताते **हैं**–'**भूतेति**।' यहाँ भाष्य में '**भूतसूक्ष्म**' शब्द के द्वारा तन्मात्र से लेकर प्रकृतिपर्यन्त पदार्थों का ग्रहण होता है। '**सूक्ष्म**' शब्द के कारणार्थक (कारणवाचक) होने से यहाँ इन्द्रियों का संग्रह (अधिग्रहण) नहीं होता है। '**स्थूल**' शब्द से पृथिव्यादि महाभूत का ग्रहण होता

---

1. क ख ग घ – **अत्र**, च – **यत्र**, छ – **तत्र**।
2. क – **एव साक्षिणि** उपलभ्यते, ख ग घ च छ – **एव साक्षिणि** नोपलभ्यते।
3. क ग घ च छ – **कारणार्थतया**, ख – **कारणतया**।
4. क – **भूतेन्द्रियग्रहणं**, ख ग घ – **अत्र नेन्द्रियग्रहणं**, च छ – **नात्रेन्द्रियग्रहणम्**।
5. क – **अन्यं**, ख ग घ च छ – **अन्यत्**।

है और '**विश्वभेद**' शब्द से स्थूलकोटिक स्थावर, जङ्गमादिरूप अवान्तरभेदों को लिया जाता है। शेष पूर्ववत् है।

सम्प्रति, योगवार्त्तिककार '**ग्रहणसमापत्ति**' के स्वरूप को विशदीकृत करते हैं–

## योगवार्त्तिकम्

**गृह्यतेऽनेनेति ग्रहणमिन्द्रियम्, तत्र समापत्तौ सूक्ष्मस्थूलविश्वभेदरूपं त्रैविध्यमतिदिशति–तथा ग्रहणेष्वपीति। इन्द्रियाणां सूक्ष्मं बुद्ध्यहंकाराविति भाष्यकारो वक्ष्यति। स्थूलं च चक्षुरादिकं विश्वभेदश्च स्थावरजङ्गमानां चक्षुरादि[1]विशेषा इति। अवान्तरविभागमतिदिश्य ग्रहणसमापत्तिं सामान्यतो दर्शयति–ग्रहणालम्बनेति। पूर्ववद्व्याख्येयम्। ग्रहीतृसमापत्तिं पूर्ववद्व्याचष्टे–तथा ग्रहीत्रिति। ग्रहीतृत्वं बुद्धेरपि व्यपदिश्यत इति तद्व्यावर्त्तनाय पुरुषपदम्। अत्र च[2] ग्रहणफलोपहितत्वं ग्रहीतृत्वं[3] स्वरूपयोग्यतापरत्वे मुक्तपुरुषेषु पृथग्वचनानौचित्यात्। ईश्वरस्य चात्रैव प्रवेशः। ग्रहणस्वरूप[4]योग्यमात्रेष्वपि समापत्तिं व्याचष्टे–मुक्तेति। [5]मुक्ता आत्यन्तिकलयं गताः शुकादयः। समग्रसूत्रार्थमाह–तदेवमिति॥४१॥**

योगवार्त्तिककार '**ग्रहण**' शब्द की व्युत्पत्ति करते हैं–'**गृह्यतेऽनेनेति ग्रहणम्**' अर्थात् जिसके द्वारा वस्तु गृहीत होती है, उसे '**ग्रहण**' कहते हैं। '**ग्रहण**' शब्द का अर्थ है–इन्द्रिय। भाष्यकार इस ग्रहणविषयक समापत्ति में सूक्ष्म, स्थूल और विश्वभेदरूप त्रिविध विषय का अतिदेश करते हैं–'**तथा ग्रहणेष्वपीति**।' बुद्धि और अहंकार '**ग्रहण**' रूप इन्द्रियों के सूक्ष्मरूप हैं, ऐसा भाष्यकार आगे प्रतिपादित करेंगे। चक्षुरादि, इन्द्रियों का स्थूलरूप है तथा स्थावर, जङ्गमादियों के चक्षुरादिविशेष उसका विश्वभेदरूप है। इस प्रकार ग्रहणसमापत्ति के (विषयगत) अवान्तरविभाग का अतिदेश करके भाष्यकार ग्रहणसमापत्ति को सामान्यरूप से प्रदर्शित करते हैं–'**ग्रहणालम्बनेति**।' ग्राह्यसमापत्ति की भाँति ग्रहणसमापत्ति का स्वरूप भी पूर्ववत् समझ लेना चाहिये। भाष्यकार पूर्वप्रतिपादित समापत्तियों की भाँति **ग्रहीतृसमापत्ति** की भी व्याख्या करते हैं–'**तथा ग्रहीत्रिति**।' क्योंकि '**ग्रहीतृ**' पद से बुद्धि का भी व्यपदेश (व्यवहार) होता है, अतः '**ग्रहीतृ**' पद के इस अर्थ की व्यावृत्ति के लिये भाष्यकार ने यहाँ '**पुरुष**' पद का प्रयोग किया है। यहाँ '**ग्रहण**' का फलोपहितत्वरूप ग्रहीतृत्व मुक्त पुरुषों में भी स्वरूपयोग्यतापरक होने के कारण उसका पृथक्तया निर्देश करना

---

1. क ग घ च छ – **विशेषाः**, ख – **भेदाः**।
2. क ख ग – **च** उपलभ्यते, घ च छ – **च** नोपलभ्यते।
3. क ग घ च छ – **ग्रहीतृत्वं** उपलभ्यते, ख – **ग्रहीतृत्वं** नोपलभ्यते।
4. क घ च छ – **योग्यमात्रेषु**, ख – **योग्येषु**, ग – **मात्रेषु**।
5. क ग घ च छ – **मुक्ता आत्यन्तिकलयं गताः शुकादयः**, ख – **मुक्ता उपाधिवियुक्ताः तेन सुषुप्तिप्रलयकालीनपुरुषाणां नात्र संग्रहः**।

उचित नहीं है। (क्योंकि मुक्त पुरुष में भी ग्रहणयोग्यता सम्भव है। अतः **'गृहीतृ'** पद से मुक्त पुरुष का भी स्वतः ग्रहण हो जाने से अलग से मुक्तपुरुषविषयक ग्रहीतृ-समापत्ति का उल्लेख करना आवश्यक प्रतीत नहीं होता है)। किञ्च ईश्वर का भी इसी ग्रहीतृसमापत्ति में अन्तर्भाव होता है। भाष्यकार ग्रहणस्वरूपयोग्यतामात्र विषयों में भी इस समापत्ति का अतिदेश करते हैं–**'मुक्तेति'**। आत्यन्तिक (शाश्वत) लय को प्राप्त शुकादि ऋषि यहाँ **'मुक्त'** 'पदवाच्य हैं। अब भाष्यकार पूरे सूत्र का अर्थ करते हैं–**'तदेवमिति'**। अत्यन्त धवल स्फटिकमणि की भाँति क्षीणवृत्तिक चित्त की ग्रहीतृ, ग्रहण तथा ग्राह्यविषयक पुरुष, इन्द्रिय तथा भूत पदार्थों में जो **'तदाकारापत्ति'** होती है, उसे **'सम्प्रज्ञात समाधि'** कहते हैं॥४१॥

**बालप्रिया–**

**'ग्रहीतृग्रहणग्राह्येषु'–मिश्र-भिक्षु-मतभेद**–यहाँ इतना ही संकेत करना पर्याप्त रहेगा कि सम्प्रज्ञात के वितर्कादि चार भेदों के प्रसङ्ग में विषयगत अन्तर की जो स्थिति इन आचार्यों के अनुसार पीछे देखी जा चुकी है, वह प्रकृत प्रकरण में भी परिलक्षित होती है॥४१॥

अगला सूत्र है–

**योगसूत्रम्**

**[1]तत्र शब्दार्थज्ञानविकल्पैः सङ्कीर्णा सवितर्का [2]समापत्तिः॥४२॥**

उन (ग्रहीतृ, ग्रहण तथा ग्राह्यविषयक तीन प्रकार की समापत्तियों) में से जो शब्द, अर्थ तथा ज्ञानरूप तीन विकल्पों से मिश्रित(अविभक्त) होती है, उसे 'सवितर्का समापत्ति' कहते हैं ॥४२॥

**व्यासभाष्यम्**

**[3]तद्यथा गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञानमित्यविभागेन विभक्तानामपि ग्रहणं दृष्टम्। विभज्यमानाश्चाऽन्ये शब्दधर्मा अन्येऽर्थधर्मा अन्ये [4]ज्ञानधर्मा**

---

1. **तत्र**–नोपलभ्यते।
2. **समापत्तिः**–नोपलभ्यते।
   **तस्या एकबुद्ध्युपक्रमो ह्यर्थात्मा**–इति नवीनसूत्रमुपलभ्यते।
3. छ थ – **समापत्तिरित्यनुवर्तते (तद्यथा** पूर्वम्) उपलभ्यते, ख ग घ च ज झ त द ध न प फ ब भ म य र – **समापत्तिरित्यनुवर्तते** नोपलभ्यते।
4. क ग प फ ब र – **विज्ञान०**, ख घ च़ छ ज झ त थ द ध न भ म य – **ज्ञान०**।

**इत्ये[1]तेषां विभक्तः पन्थाः। तत्र समापन्नस्य योगिनो यो गवाद्यर्थः समाधिप्रज्ञायां समारूढः स चेच्छब्दार्थज्ञानविकल्पानुविद्ध उपावर्तते सा संकीर्णा समापत्तिः सवितर्केत्युच्यते॥४२॥**

परस्पर भिन्न 'गो' शब्द, 'गो' अर्थ तथा 'गो' ज्ञान का अभिन्न रूप से (समूहालम्बनात्मक रूप से) ग्रहण (ज्ञान) देखा जाता है। वस्तुतस्तु शब्द अर्थ और ज्ञान परस्पर भिन्न हैं। (क्योंकि) 'गो' शब्द के धर्म भिन्न हैं, 'गो' अर्थ के धर्म पृथक् हैं तथा 'गो' ज्ञान के धर्म अलग हैं–इस प्रकार इन तीनों का मार्ग (स्वभाव) भिन्न-भिन्न है। तथाकथित विषय में समापन्न (समाहित) योगी की समाधि-प्रज्ञा में जो गो आदि पदार्थ समारूढ (बुद्धि में उपस्थित) होता है वह यदि शब्द, अर्थ और ज्ञानरूप विकल्प से युक्त होकर उपस्थित होता है, तो वह संकीर्ण समापत्ति 'सवितर्का समापत्ति' कही जाती है॥४२॥

## तत्त्ववैशारदी

**सामान्यतः समापत्तिरुक्ता। सेयमवान्तरभेदाच्चतुर्विधा भवति। तद्यथा–सवितर्का, निर्वितर्का, सविचारा, निर्विचारा चेति। तत्र सवितर्कायाः समापत्तेर्लक्षणमाह–तत्रेत्यादि। समापत्त्यन्तं सूत्रम्। तत्र तासु समापत्तिषु मध्ये, सवितर्का समापत्तिः प्रतिपत्तव्या। कीदृशी? शब्दश्चार्थश्च ज्ञानं च तेषां [2]विकल्पाः। वस्तुतो भिन्नानामपि शब्दादीनामितरेतराध्यासाद्विकल्पः,अप्येकस्मिन्भेदमादर्शयति भिन्नेषु चाभेदम्। तेन शब्दार्थज्ञानविकल्पैः संकीर्णा [3]व्यामिश्रेत्यर्थः। तद्यथा गौरिति शब्द इति। गौरित्युपात्तयोरर्थज्ञानयोः शब्दाभेदविकल्पो दर्शितः। गौरित्यर्थ इति। गौरित्युपात्तयोः शब्दज्ञानयोरर्थाभेदविकल्पो दर्शितः। गौरिति ज्ञानमिति। गौरित्युपात्तयोः शब्दार्थयोर्ज्ञानाभेदविकल्पः दर्शितः।[4] तदेवमविभागेन विभक्तानामपि शब्दार्थज्ञानानां ग्रहणं लोके द्रष्टव्यम्। यद्यविभागेन ग्रहणं कुतस्तर्हि विभाग इत्यत आह–विभज्यमानाश्चेति। विभज्यमानाश्चान्वयव्यतिरेकाभ्यां परीक्षकैः, अन्ये शब्दधर्माः, ध्वनिपरिणाममात्रस्य शब्दस्योदात्तादयो धर्माः, अन्येऽर्थस्य जडत्वमूर्तत्वादयः, अन्ये प्रकाशमूर्तिविरहादयो ज्ञानस्य धर्मा इति। तस्मादेतेषां विभक्तः पन्थाः स्वरूपभेदोन्नयनमार्गः। तत्र विकल्पिते गवाद्यर्थे समापन्नस्येति। तदनेन योगिनोऽपरं प्रत्यक्षमुक्तम्। शेषं सुगमम्॥४२॥**

सामान्यरूप से 'समापत्ति' का परिचय प्राप्त हुआ। यह 'ग्राह्यसमापत्ति' अवान्तर भेद से चार प्रकार की है। वे चार भेद हैं–सवितर्का, निवितर्का, सविचारा तथा

1. क ख ग घ च ज झ त द ध न प फ ब भ म प र – **एतेषां विभक्तः पन्थाः**, छ थ – **एते विभक्तपथा।**
2. क ख ग घ च छ झ थ ध न – **विकल्पाः**, ज त – **विकल्पानां**, द – **विकल्पः।**
3. क ख ग घ च छ ज झ त न – **व्यामिश्र०**, थ द ध – **मिश्र०।**
4. थ द ध – **दर्शितः** उपलभ्यते, क ख ग घ च छ ज झ त न – **दर्शितः** नोपलभ्यते।

निर्विचारा। इन चार प्रकार की ग्राह्य समापत्तियों में से 'सवितर्का समापत्ति' का लक्षण सूत्रकार करते हैं-**'तत्रेति।'** यहाँ **'तत्र'** से लेकर **'समापत्तिः'** पर्यन्त सूत्र है। **'तत्र'** अर्थात् ग्राह्यविषयक समापत्तियों के मध्य **'सवितर्का समापत्ति'** जानने योग्य है। यह समापत्ति कैसी है? अर्थात् सवितर्का समापत्ति का स्वरूप क्या है? इसे बताया जा रहा है-**'शब्दश्च अर्थश्च ज्ञानं च तेषां विकल्पाः'**-अर्थात् शब्द, अर्थ तथा ज्ञान के विकल्प को शब्दार्थज्ञानविकल्प कहते हैं। पारमार्थिक दृष्टि से परस्पर भिन्न होते हुए भी इन शब्दादियों का इतरेतराध्यास के कारण **'विकल्प'** होता है। विकल्प के कारण पदार्थ के एक रूप होते हुए भी उसमें भेद-प्रतीति होती है तथा परस्पर भिन्न पदार्थों में अभेद-प्रतीति होती है। इस प्रकार शब्द, अर्थ और ज्ञान के इतरेतराध्यासरूप विकल्प से **'संकीर्ण'** अर्थात् मिश्रीभूत हुई जो समापत्ति होती है, उसे **'सवितर्का समापत्ति'** कहते हैं। (उदाहरण है)-**'तद्यथा गौरिति शब्द इति।'** यहाँ **'गौः'** अर्थात् 'गो' शब्द द्वारा अवाप्त (गृहीत) उसके अर्थ और ज्ञान का 'गो' शब्द के साथ अभेदरूपविकल्प (अभेदात्मक इतरेतराध्यास) प्रदर्शित किया गया है। **'गौरित्यर्थ इति।'** यहाँ **'गो'** इस अर्थ के द्वारा अवाप्त (गृहीत) शब्द और ज्ञान का 'अर्थ' के साथ अभेदरूपविकल्प (अभेदात्मक इतरेतराध्यास) प्रदर्शित किया गया है। **'गौरिति ज्ञानमिति'।** यहाँ **'गो'** इस ज्ञान के द्वारा गृहीत शब्द और अर्थ का ज्ञान के साथ अभेदरूप विकल्प (अभेदात्मक इतरेतराध्यास) बतलाया गया है। इस प्रकार लोक में परस्पर विभक्त (भिन्न) होते हुए भी शब्द, अर्थ और ज्ञान का अभेद रूप से ग्रहण देखा जाता है।

**शङ्का**-(लोक में) यदि शब्द, अर्थ और ज्ञान अभिन्नरूप से गृहीत होते हैं, तो फिर इनमें भेद (विभाग) कैसे कहा जा सकता है? अर्थात् शब्द, अर्थ और ज्ञान में अभेद ही मान लिया जाय?

**समाधान**-इस पर भाष्यकार का वक्तव्य है-**'विभज्यमानाश्चेति।'** परीक्षकों ने अन्वय-व्यतिरेक के द्वारा शब्द-अर्थ-ज्ञान को (उनके धर्मों के अनुसार) परस्पर विभाजित किया है। शब्दादि के भेदक धर्मों को बतलाया जा रहा है-**'अन्ये शब्दधर्माः'**-ध्वनि के परिणामभूत शब्द के **'उदात्तादि'** धर्म हैं, जो अर्थ और ज्ञान के धर्मों से भिन्न हैं। अर्थ (पदार्थ) के **'जडत्व'**, **'मूर्तत्व'** आदि धर्म हैं जो शब्द और ज्ञान के धर्मों से भिन्न हैं तथा ज्ञान के **'प्रकाश'**, **'अमूर्तत्व'** आदि धर्म हैं, जो शब्द और अर्थ के धर्मों से भिन्न हैं। इस प्रकार शब्द, अर्थ और ज्ञान का मार्ग विभक्त है अर्थात् उनका स्वरूपभेदमूलक (धर्मभेदपरक) मार्ग पृथक्-पृथक् है। **'तत्र'** अर्थात् ऐसे विकल्पित गवादि अर्थ में **'समापन्नस्येति'** अर्थात् समापन्न चित्त वाले योगी की समाधि-प्रज्ञा में गवादि शब्द का जो इतरेतराध्यास होता है, उसे **'सवितर्का समापत्ति'**

कहते हैं। इस अंश के द्वारा भाष्यकार ने योगी के **'अपर प्रत्यक्ष'** को बतलाया है। शेष भाष्य सुकर है॥४२॥

**बालप्रिया–**

**'तत्र'**–सूत्रगत **'तत्र'** पद से सप्तमीविभक्ति का **'निर्धारण'** अर्थ बोधित कराने के लिये तत्त्ववैशारदीकार ने **'तासु समापत्तिषु'** के साथ **'मध्ये'** पद का प्रयोग किया है। किन्तु इस **'मध्ये'** पद को इन सप्तम्यन्त पदों में सन्निविष्ट नहीं करना चाहिये, अन्यथा **'तासु समापत्तिषु'** के स्थान पर **तासां समापत्तीनाम्** इस षष्ठ्यन्त प्रयोग का प्रसङ्ग आयेगा ॥४२॥

## योगवार्त्तिकम्

**सामान्यतः समापत्तिरुक्ता। तत्र ग्रहीतृसमापत्तौ स्थूलसूक्ष्मविषयत्वरूपविशेषाभावात्सा एकविधैव, ग्राह्यग्रहणसमापत्त्योस्तु तद्विशेषसत्त्वात्तयोर्विशेषानाह त्रिभिः सूत्रैः–तत्र शब्दार्थज्ञानविकल्पैः सङ्कीर्णा सवितर्का समापत्तिः। तृतीयसूत्रे सूक्ष्मविषयकसमापत्तेः वक्ष्यमाणतयाऽ[1]स्य सूत्रद्वयस्य स्थूलविषयकत्वं परिशेषाल्लभ्यते। स्थूलं कार्यं सूक्ष्मं कारणम्। तत्र स्थूलं द्विविधम्–भूतानि तन्मात्राणां कार्याणि; इन्द्रियाणि चाहंकारस्य कार्याणीति। तत्र च स्थूलसूक्ष्मसमापत्ती द्विविधे भवतः। तासु चतसृषु समापत्तिषु सविकल्पिकायाः स्थूलविषयकसमापत्तेर्लक्षकमिदं सूत्रम्। तदेतद् व्याचक्षाण आदौ शब्दार्थज्ञानविकल्पमुदाहरति–तद्यथेत्यादिना दृष्टमित्यन्तेन। इत्यविनिर्भागेण=एवमभेदेन विभक्तानां वस्तुतो भिन्नानामपि ग्रहणं विकल्पाख्यं लोके दृष्टं पूर्वोक्तविकल्पलक्षणाक्रान्तत्वादित्यर्थः। ननु वस्तुशून्यत्वे सति विकल्पः स्यात्; प्रतीतिबलात्त्वभेदोऽत्रवस्तुसन्नेव भवतु तत्राह–विभज्यमानाश्चेति। अन्वयव्यतिरेकाभ्यां परीक्षकैर्विभज्यमाना विविच्यमाना अन्येऽर्थज्ञानधर्माभ्यां भिन्नाः शब्दधर्मास्तारत्वमन्दत्वादयः, एवमर्थधर्माः जडत्वमूर्त्तत्वादयः शब्दज्ञानधर्माभ्यामन्ये, एवं ज्ञानधर्माः प्रकाशामूर्त्तत्वादयः शब्दार्थधर्माभ्यामन्ये, [2]इत्थमेतेषां शब्दार्थज्ञानानां विभक्तोऽन्योन्यं भिन्नः पन्थाः=स्वरूपभेदोऽन्नयनमार्ग इत्यर्थः। समापत्तिरेव विकल्परूपेत्यतो विकल्पसंकीर्णत्वानुपपत्तिरित्याशयेनान्यथा सूत्रार्थं व्याचष्टे–तत्रेति। तत्र गवादौ स्थूलभूतेन्द्रियेषु समापन्नस्य समाहितस्य योगिनः समाधिप्रज्ञायां समारूढो यो गवाद्यर्थः स यदि शब्दार्थज्ञानविकल्पेन 'गौरियं भासते' इत्येवं शब्दार्थज्ञानानामभेदभ्रमेणानुविद्धो विषयीकृतो भवति तदा सा सङ्कीर्णा विकल्पमिश्रिता, विकल्पविषयीभवदर्थविषयिणीति यावत्, समापत्तिः सवितर्कसंज्ञा भवतीत्यर्थः। अत्र हि गौरियमित्यंशे शब्दार्थयोरभेदविकल्पः, भासत इत्यंशे चार्थज्ञानयो[3]रभेदविकल्पः; अर्थद्वारा च शब्दज्ञानयोरप्यभेदविकल्पः। एवं 'नारायणोऽयं भासते'**

---

1. क घ च छ – **अस्य**, ख – **आद्य०**, ग – **अस्य/आद्य०** नोपलभ्यते।
2. क ख ग घ – **इत्ययं**, च छ – **इत्थम्**।
3. क – **अभेदसवितर्कसमापत्तिः**, ख ग घ च छ – **अभेदविकल्पः**।

**इत्यादिरूपैश्च सवितर्का समापत्तिर्भवति। अत्र शब्दादिविकल्पैर्यथासम्भवमन्येऽपि विकल्पा उपलक्षणीया:। इयं च समापत्तिरपरं प्रत्यक्षमविद्यालेशसम्बन्धादिति॥४२॥**

सामान्यरूप से '**समापत्ति**' कही गई। इनमें से ग्रहीतृसमापत्ति में स्थूल और सूक्ष्म विषयकत्वरूप (स्थूलविषय और सूक्ष्मविषय की दृष्टि से) विशेष का अभाव रहने से 'ग्रहीतृसमापत्ति' एक प्रकार की है। किन्तु ग्राह्य और ग्रहणविषयक समापत्तियों में विषयगत स्थूलत्व और सूक्ष्मत्वरूप अन्तर होने से इन दोनों समापत्तियों के भेदों को तीन सूत्रों के द्वारा सूत्रकार बताते हैं। सूत्र है–'**तत्रेति**।' तृतीय सूत्र १/४४ में सूक्ष्मविषयक समापत्ति का प्रतिपादन होने से पूर्व के दो सूत्र (१/४२, ४३) स्थूलविषय वाले हैं, ऐसा परिशेषात् निकल आता है। इनमें '**स्थूल**' शब्द का अर्थ '**कार्य**' और '**सूक्ष्म**' शब्द का अर्थ '**कारण**' है। '**स्थूल**' दो प्रकार का है–सूक्ष्मतन्मात्राओं का कार्य पञ्चमहाभूत तथा अहंकार का कार्य इन्द्रियाँ। इस प्रकार महाभूत और इन्द्रियाँ '**स्थूल**' पदवाच्य हैं। स्थूलविषयक समापत्ति और सूक्ष्मविषयक समापत्ति दो-दो प्रकार की हैं। इन चारों प्रकार की समापत्तियों में स्थूलविषयक सविकल्पित समापत्ति का यह लक्षणपरक सूत्र है। इस स्थूलविषयक सवितर्कसमापत्ति को बताने के इच्छुक भाष्यकार सर्वप्रथम शब्द, अर्थ और ज्ञान के विकल्प को उदाहृत करते हैं–'**तद्यथेत्यादिना दृष्टमित्यन्तेन**' अर्थात् '**तद्यथा**' से लेकर '**दृष्टम्**' यहाँ तक के भाष्य द्वारा। जैसे 'गो यह शब्द है', 'गो यह अर्थ है' और 'गो यह ज्ञान है'–इत्याकारक 'अविभाग'=अभेद के कारण पारमार्थिक रूप से 'विभक्त'=भिन्न शब्दादि का भी लोक में विकल्पाख्य ग्रहण देखा जाता है, क्योंकि इसमें पूर्वोक्त विकल्प (**शब्दज्ञानानुपाती वस्तुशून्यो विकल्प:**) का लक्षण घटित होता है।

**शङ्का**–वस्तुशून्य होने पर ही 'विकल्प' होता है अर्थात् विकल्प में पदार्थ असद्रूप (अलीक) रहता है, किन्तु यहाँ पदार्थ के सत् (वास्तविक) रहते हुए ही प्रतीति के बल पर होने वाली अभेद-प्रतीति को वास्तविक क्यों न माना जाय?

**समाधान**–इस पर भाष्यकार कहते हैं–'**विभज्यमानाश्चेति**।' परीक्षकों ने अन्वय-व्यतिरेक से विभाग करते हुए अर्थ और ज्ञान के धर्मों से शब्द के तारत्व, मन्दत्व आदि भिन्न धर्म बताये हैं, शब्द और ज्ञान के धर्मों से अर्थ के जडत्व, मूर्तत्व आदि भिन्न धर्म बताये हैं तथा इसी प्रकार शब्द और अर्थ के धर्मों से ज्ञान के प्रकाशत्व, अमूर्त्तत्व आदि भिन्न धर्म माने हैं। इस प्रकार शब्द, अर्थ और ज्ञान का '**विभक्त**' अर्थात् अन्योन्यभिन्न '**पन्था**' अर्थात् स्वरूपत: भेदात्मक मार्ग है। इस व्याख्या के अनुसार तो समापत्ति ही विकल्परूपा है, अत: उसमें विकल्पसंकीर्णत्व अनुपपन्न है, इसी अभिप्राय से भाष्यकार अन्य प्रकार से सूत्र की व्याख्या करते हैं–'**तत्रेति**।' उन गवादि स्थूलभूतेन्द्रियों में '**समापन्न**' अर्थात् समाहित योगी की समाधिप्रज्ञा में

समारूढ जो गवादि विषय है, वह यदि शब्द, अर्थ और ज्ञान के 'विकल्प'='**गौरियं भासते**'–इत्याकारक शब्द, अर्थ और ज्ञान के 'अभेदभ्रम' से युक्त होकर विषयीकृत (ज्ञात) होता है, तब वह समापत्ति '**संकीर्णा**'=विकल्पयुक्ता होती है अर्थात् 'विकल्पात्मक' अर्थविषयिणी समापत्ति सवितर्कसंज्ञा वाली होती है। यहाँ '**गौरियम्**' इत्यंश में शब्द और अर्थ का अभेदात्मक विकल्प है, '**भासते**' इत्यंश में अर्थ और ज्ञान का अभेदात्मक विकल्प है तथा अर्थ द्वारा शब्द और ज्ञान का भी अभेदात्मक विकल्प आ जाता है। इसी प्रकार '**नारायणोऽयं भासते**' इत्यादि रूपों से सवितर्का समापत्ति परिज्ञात होती है। यहाँ शब्दादि विकल्पों से अन्य प्रकार के यथासम्भव विकल्प भी गृहीत होते हैं। यह समापत्ति अविद्या से लवलेश युक्त होने से '**अपरप्रत्यक्ष**' कही जाती है॥४२॥

सम्प्रति, भाष्यकार अग्रिम सूत्र को अवतरित करते हैं–

**व्यासभाष्यम्**

**यदा पुनः शब्दसंकेतस्मृतिपरिशुद्धौ श्रुतानुमानज्ञानविकल्पशून्यायां समाधिप्रज्ञायां स्वरूपमात्रेणावस्थितोऽर्थस्तत्स्वरूपाकारमात्रतयैवावच्छिद्यते सा च निर्वितर्का[1] समापत्तिः। तत्परं प्रत्यक्षम्। तच्च श्रुतानुमानयोर्बीजम्। ततः श्रुतानुमाने प्रभवतः। न च श्रुतानुमानज्ञानसहभूतं तद्दर्शनम्। तस्मादसंकीर्णं प्रमाणान्तरेण योगिनो [2]निर्वितर्कसमाधिजं दर्शनमिति। निर्वितर्कायाः समापत्तेरस्याः सूत्रेण लक्षणं द्योत्यते–**

फिर जब शब्दार्थज्ञान के अन्योन्याध्यास की स्मृति की निवृत्ति हो जाने पर आगमज्ञान तथा अनुमानज्ञान के (भी) विकल्पों से रहित समाधिप्रज्ञा में अपने शुद्ध रूप से ही स्थित 'अर्थ' अपने रूप के ही आकार से अवधारित है, तब उसे 'निर्वितर्का समापत्ति' कहते हैं। इसे 'पर-प्रत्यक्ष' कहते हैं। यह परप्रत्यक्षरूप ज्ञान आगम और अनुमान का हेतु है। क्योंकि इससे ही (पर-प्रत्यक्ष के पश्चात्) ही आगम और अनुमान उत्पन्न होते हैं। और यह 'पर-प्रत्यक्ष' रूप ज्ञान आगम और अनुमान के साथ उत्पन्न होने वाला (ज्ञान) भी नहीं है। इसीलिये किसी दूसरे प्रमाण से असंकीर्ण (अमिश्रित) योगी का यह निर्वितर्क समाधिजन्य ज्ञान है। इस निर्वितर्का समापत्ति का लक्षण सूत्र के द्वारा प्रदर्शित किया जा रहा है–

---

1. क ख ग घ च छ ज त थ द ध न प फ ब भ म य र – **निर्वितर्का**, झ – **निर्विकल्पा**।
2. क ख ग घ च छ झ त थ द ध न प फ ब भ म य र – **निर्वितर्क०**, ज – **निर्वितर्कम्**।

### योगसूत्रम्

## स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का॥४३॥

स्मृति की निवृत्ति (परिशुद्धि) हो जाने पर अपने (ग्रहणाकार ज्ञानात्मक) रूप से रहित सदृश एकमात्र ग्राह्यरूप 'अर्थ' को ही प्रकाशित करने वाली (चित्तवृत्ति) 'निर्वितर्का समापत्ति' कहलाती है॥४३॥

### व्यासभाष्यम्

**या शब्दसंकेतश्रुतानुमानज्ञानविकल्पस्मृतिपरिशुद्धौ ग्राह्यस्वरूपोपरक्ता [1]प्रज्ञा स्वमिव प्रज्ञा[2]रूपं ग्रहणात्मकं त्यक्त्वा पदार्थमात्रस्वरूपा ग्राह्यस्वरूपापन्नेव भवति सा तदा[3] निर्वितर्का समापत्तिः। तथा च व्याख्यातम्[4]—[5]तस्या एकबुद्ध्युपक्रमो ह्यर्थात्माऽणुप्रचयविशेषात्मा गवादिर्घटादिर्वा लोकः। स च संस्थान[6]विशेषो भूतसूक्ष्माणां साधारणो धर्म आत्मभूतः, फलेन व्यक्तेनानुमितः स्वव्यञ्जकाञ्जनः [7]प्रादुर्भवति, [8]धर्मान्तरोदये च तिरोभवति। स एष धर्मोऽवयवीत्युच्यते। योऽसावेकश्च महाँश्चा[9]णीयाँश्च स्पर्शवाँश्च क्रियाधर्मकश्चानित्यश्च तेनावयविना व्यवहाराः क्रियन्ते। यस्य पुनरवस्तुकः स प्रचयविशेषः सूक्ष्मं च कारणमनुपलभ्यम[10]विकल्पस्य तस्यावयव्यभावादतद्रूपप्रतिष्ठं मिथ्याज्ञानमिति प्रायेण सर्वमेव प्राप्तं मिथ्याज्ञानमिति। तदा च सम्यग्ज्ञानमपि किं स्याद्विषयाभावात्। यद्यदुपल-**

---

1. क ख ग घ च ज झ त द ध प फ ब भ म य र – **प्रज्ञा** उपलभ्यते, छ थ न – **प्रज्ञा** नोपलभ्यते।
2. क ग च छ ज झ त थ द ध न ब भ य र – **स्वरूपं**, ख ध प फ म र – **रूपम्**।
3. क ख ग ब भ य – **तदा** उपलभ्यते, घ च छ ज झ त थ द ध न प फ म र – **तदा** नोपलभ्यते।
4. क ख ग घ च छ ज झ त थ द ध न प ब भ म य – **व्याख्यातम्**, फ र – **व्याख्याता**।
5. ज झ त – **तस्या एकबुद्ध्युपक्रमो ह्यर्थात्मा** स्वतन्त्रसूत्रं, क ख ग घ च छ थ द ध न प फ ब भ म य र – **तस्या....ह्यर्थात्मा** भाष्यांशः।
6. क ख ग घ च छ ज झ त थ ध न प फ ब भ म प र – **विशेषो भूत०**, द – **विशेषीभूत०**।
7. क ग – **प्रादुर्भूतो भवति**, ख घ च छ ज झ त थ द ध न प फ ब भ म य र – **प्रादुर्भवति**।
8. क ग च छ ज झ त थ द ध न ब भ म – **धर्मान्तरस्य कपालादेरुदये**, ख घ प प म र – **धर्मान्तरोदये**।
9. क ख ग घ च छ झ त थ द ध न प फ ब भ म य र – **मणीयाँश्च** उपलभ्यते, ज – **अणीयाँश्च** नोपलभ्यते।
10. घ प फ ब म र – **अविकल्पस्य** उपलभ्यते, क ख ग च छ ज झ त थ द ध न भ य – **अविकल्पस्य** नोपलभ्यते।

**भ्यते तत्तदवयवित्वेना[1]घ्रातम्। तस्मादस्त्यवयवी यो [2]महत्त्वादिव्यवहारापन्नः समापत्ते[3]र्निर्वितर्कायाः विषयो भवति॥४३॥**

शब्दसंकेतज्ञान, आगमज्ञान एवं अनुमानज्ञानरूप विकल्पात्मक स्मृति के अपगम (निवृत्त) होने पर ग्राह्य आलम्बन के स्वरूप से उपरक्त जो प्रज्ञा अपने ज्ञानात्मक प्रज्ञारूप को त्याग दिये के समान एकमात्र ग्राह्याकार को प्राप्त हुई सी हो जाती है, वह प्रज्ञा (चित्तवृत्ति) 'निर्वितर्का समापत्ति' कही जाती है। यही तथ्य पीछे बतलाया गया है। इस निर्वितर्का समापत्ति का आलम्बनभूत गवादि अथवा घटादि लोक (विषय) 'एक बुद्धि को उत्पन्न करने वाला', 'विषय (अर्थ) रूप' तथा 'अणुओं का संस्थानविशेष' (परिणाम-विशेष) है। और यह अवयवसन्निवेशविशेषरूप आलम्बन भूतसूक्ष्मों का साधारणधर्म है, तदात्मक है, अभिव्यक्तिरूप कार्य से अनुमित होता है, स्वकारणाकार प्रकट होता है और कपाल इत्यादि अन्य धर्मों के उदित होने पर तिरोहित हो जाता है। वही यह (स्थूल घटादि कार्यरूप) धर्म 'अवयवी' कहा जाता है। जो यह (परिणामस्वरूप अवयवी) एक, महान्, अत्यन्त लघु, स्पर्श वाला, क्रियारूप (जलाहरणादि) धर्म वाला तथा अनित्य कहा जाता है (और) उसी अवयवी के द्वारा सारे व्यवहार निष्पन्न होते हैं। जिसके मत में अवयवसन्निवेशविशेषरूप (स्थूलरूप परिणामी) अवयवी अवास्तविक (तुच्छ) है और सूक्ष्मकारण (परमाणु) अदृश्य (प्रत्यक्ष के अयोग्य) होता है, उसके मत में 'अवयवी' के अभाव के कारण समस्त ज्ञानों को अतद्रूपप्रतिष्ठ मिथ्याज्ञान ही स्वीकार करना पड़ेगा। और ऐसी स्थिति में उन (बौद्धों) के मत में (स्थूल अवयवी रूप) विषय का अभाव होने से सत्यज्ञान (सम्यग्ज्ञान) भी कैसा होगा? (क्योंकि) संसार में जो-जो वस्तुएँ उपलब्ध होती हैं, वे सब 'अवयवी' रूप से ही कथित हैं। अतः (ज्ञान की सत्यता के लिये) यह मानना पड़ेगा कि स्थूल अवयवी है, जो महान्, स्थूल आदि व्यवहार का विषय है। और यही 'अवयवी' (धर्मी) 'निर्वितर्का समापत्ति' का विषय है॥४३॥

---

1. क ग च छ थ द ध न ब भ – आम्नातं, ख ज झ त प फ मयर – **आघ्रातं**, घ – **अनाघ्रातम्**।
2. क ख ग घ च न प फ ब भ म य र – **महत्तत्त्व०**, छ ज झ त थ द ध – **महत्त्व०**।
3. क ख ग ब – **निर्वितर्काया विषयी**, घ च छ ज झ त थ द ध न प फ म य र – **निर्वितर्काया विषयः**; भ – **निर्वितर्का विषयः**।

## तत्त्ववैशारदी

**सूत्रं योजयितुं प्रथमतस्तावन्निर्वितर्कां व्याचष्टे–यदा पुनरिति। परिशुद्धिरपनयः शब्दसंकेतस्मरणपूर्वे खल्वागमानुमाने प्रवर्तेते। संकेतश्चायं गौरिति शब्दार्थज्ञानानामितरेतराध्यासात्मा। ततश्चागमानुमानज्ञान[1]विकल्पौ भवतः। तेन तत्पूर्वा समाधिप्रज्ञा सवितर्का। यदा पुनरर्थमात्रप्रवणेन चेतसार्थमात्रादृतेन तदभ्यासान्नान्तरीयकतामुपगता संकेतस्मृतिस्त्यक्ता, तत्त्यागे च श्रुतानुमानज्ञानविकल्पौ तन्मूलौ त्यक्तौ, तदा तच्छून्यायां समाधिप्रज्ञायां स्वरूपमात्रेणावस्थितोऽर्थस्तत्स्वरूपमात्रतयैव न तु विकल्पितेनाकारेण परिच्छिद्यते, सा निर्वितर्का समापत्तिरिति। तद्योगिनां परं प्रत्यक्षमसदारोपगन्धस्याप्यभावात्।**

पूर्ववर्ती सूत्र के साथ प्रस्तूयमान सूत्र का सम्बन्धान्वय करने के लिये भाष्यकार सर्वप्रथम निर्वितर्क समापत्ति का स्वरूप-निर्देश करते हैं–**यदा पुनरिति**।' '**परिशुद्धि**' पद का अर्थ है–दूरीकरण। शब्दसंकेत तथा स्मरणपूर्वक आगम और अनुमानप्रमाण प्रवृत्त होते हैं। '**अयं गौः**'–इत्याकारक '**संकेत**'; शब्द, अर्थ और ज्ञान का '**इतरेतराध्यास**' रूप है। अर्थात् शब्द, अर्थ और ज्ञान के मिथ्यारोप को '**संकेत**' कहते हैं। जैसे '**अयं गौः**'–इस उदाहरण में शब्द, अर्थ और ज्ञान तीनों की आविद्यिक अभेद-प्रतीति होती है। संकेत के पश्चात् आगम और अनुमानज्ञानरूप विकल्प होते हैं। अर्थात् संकेत के कारण होने वाले अनुमान और आगमज्ञान में भी विकल्प भासित होता है। फलतः विकल्पित अनुमान और आगमपूर्वक होने वाली सवितर्का समाधिप्रज्ञा भी 'विकल्प' से संकीर्ण होती है। किन्तु जब 'अर्थ' मात्र की ओर स्वभावतः झुकने वाले चित्त से एकाग्रतापूर्वक '**अर्थ**' मात्र का अभ्यास किया जाता है, तब संकेतस्मृति अनिवार्य रूप से दूर हो जाती है। तदनन्तर संकेतस्मृति के परिशुद्ध होने पर शब्दसंकेत और स्मृतिमूलक विकल्पात्मक श्रुतज्ञान और अनुमानज्ञान भी दूर हो जाते हैं। तब शब्दसंकेत और स्मृति से शून्य समाधिप्रज्ञा में स्वरूपमात्र से अवस्थित '**अर्थ**' अपने वास्तविक रूप से ही परिज्ञात होता है, न कि शब्द, अर्थ और ज्ञान के भ्रान्तिपूर्ण संमिश्रण के रूप से। इसी अविकल्पित '**अर्थ**' मात्र के निर्भास को '**निर्वितर्का समापत्ति**' कहते हैं। इसी को योगिजन '**परप्रत्यक्ष**' कहते हैं। क्योंकि इसमें शब्द, अर्थ और ज्ञान के अवास्तविक (काल्पनिक) आरोप की गन्ध भी नहीं रहती है।

'**परप्रत्यक्ष**' के अविकल्पित अर्थविषयत्व को पूर्वपक्षी मानने के लिये तैयार नहीं है। तदर्थ पूर्वपक्ष के उपस्थापनपूर्वक उत्तरपक्ष का प्रस्तुतीकरण हो रहा है–

1. क ख ग घ च छ त थ द ध न – ज्ञान०, ज झ – ज्ञाने।

**मिथ्याज्ञानमित्यायातम्, यतोऽतद्रूपप्रतिष्ठमेव मिथ्याज्ञानमिति। तदा च सर्वस्य मिथ्याज्ञानत्वे सम्यग्ज्ञानमपि किं स्यात्? न स्यादेव विषयाभावेन क्वापि, ज्ञानस्य सद्विषयकत्वासिद्धेरित्यर्थः। तत्र हेतुः—यद्यदिति। नन्ववयवज्ञानस्य सम्यग्ज्ञानत्वं स्यादिति चेत्? न; सूक्ष्मं चेत्यादिनाऽवयवानामप्रत्यक्षत्वस्योक्तत्वात्। अप्रत्यक्षेष्ववयवेषु लिङ्गं चावयव्येव, तस्या**[1]**भावात्** [2]**पूर्वावयवज्ञानं प्रमाणाभावादेवासिद्धमित्याशयः। ज्ञानज्ञानस्य सम्यग्ज्ञानत्वं कदाचित् स्यादित्याशयात् प्रायेणेत्युक्तम्।** [3]**अवयव्यभावे संघाताश्रितत्वेन परैरभ्युपगतस्य ज्ञानस्यापि रूपादिव**[4]**न्मिथ्यात्वे सर्वं ज्ञानं भ्रमो ज्ञानत्वादित्यनुमानसंभवाच्चेति। स्वसिद्धान्तमुपसंहरति— तस्मादिति। सवितर्कायाः कदाचिद् विकल्पेनाप्युपपत्तिरित्याशयेन निर्वितर्काया इत्युक्तम्॥४३॥**

अवयव और विज्ञान से भिन्न होने से इन दोनों के हेतुभूत वैधर्म्यजात (अर्थात् विपरीत धर्मों की स्थिति) को भाष्यकार अवयवी में प्रदर्शित करते हैं—'**योऽसाविति**।' अवयवी के यथासंभव छह विशेषण (एक, महान् अणुयुक्त, स्पर्शयुक्त, क्रियायुक्त और अनित्य) अवयव और विज्ञान से विपरीतधर्म (वैधर्म्य) वाले हैं। वैशेषिक लोग त्र्यणुक शब्द से जिस परिमाणविशेष का अभिधान करते हैं, वह योगमत में अणीयान् (अणुपरिमाण वाला) कहलाता है, क्योंकि कार्यों में परमसूक्ष्मता का अभाव रहता है। अवयवादि से विलक्षण, जलाहरणादि के व्यवहार का कारण होने से भी अवयव से अतिरिक्त अवयवी सिद्ध होता है, ऐसा भाष्यकार प्रतिपादित करते हैं—'**तेनावयविनेति**।' अर्थात् उसी अवयवी के द्वारा यथायोग्य सब व्यवहार किये जाते हैं।

**शङ्का**—अवयव से अतिरिक्त अवयवी नहीं होता है, अतः अवयव ही निर्विकल्पक साक्षात्कार के विषय बनते हैं।

**समाधान**—भाष्यकार वैनाशिकों के इस मत का निरसन करते हैं—'**यस्य पुनरिति**।' जिस बौद्धमत में प्रचयनिमित्तक (अवयवसमूह कारणक) 'अवयविरूप' (अवयव्याख्य) विशेष '**अवस्तुक**' अर्थात् तुच्छ है तथा '**सूक्ष्म**' अर्थात् अवयवाख्य कारण वाला होने से प्रत्यक्ष का विषय नहीं है, उसके मत में अवयवी का अभाव होने से प्रायः सभी ज्ञान मिथ्यारूप ही सिद्ध होंगे, क्योंकि जो अपने रूप में प्रतिष्ठित नहीं होता है, वही तो मिथ्याज्ञान है और जब सभी ज्ञान मिथ्यारूप सिद्ध हो जायेंगे, तब विषयाभाव के कारण सम्यग्ज्ञान ही नहीं रह पायेगा, क्योंकि ज्ञान सद्विषयक ही

---

1. क ख घ च छ – **अभावात्**, ग – **अभावस्तु**।
2. क घ च छ – **पूर्व०** उपलभ्यते, ख ग – **पूर्व०** नोपलभ्यते।
3. ग – **वस्तुतस्तु ( अवयवि० प्राक्)** उपलभ्यते, क ख घ च छ – **वस्तुतस्तु** नोपलभ्यते।
4. क ख घ च छ – **मिथ्यात्वे**, ग – **मिथ्यात्वम्**।

होता है। भाष्यकार इसमें हेतु उपन्यस्त करते हैं–'**यद्यदिति**।' अर्थात् जो-जो पदार्थ भासते हैं, वे सब अवयविरूप से ही प्रतीत होते हैं।

**शङ्का**–अवयव ज्ञान को ही सम्यग्ज्ञान मान लिया जाय?

**समाधान**–ऐसी बात नहीं है, क्योंकि '**सूक्ष्मं च**' इत्यादि के द्वारा भाष्यकार ने सूक्ष्म होने के कारण अवयवों का प्रत्यक्ष न होना प्रतिपादित किया है। अतः अप्रत्यक्षीभूत अवयवों का लिङ्ग 'अवयवी' ही होता है अर्थात् अवयवी-लिङ्ग से उसके अवयवों का अनुमान किया जाता है। अवयवी को न मानने पर अवयवज्ञान का प्रामाण्य भी सिद्ध नहीं हो पायेगा। फलतः अवयव की सत्ता भी असिद्ध हो जायेगी। क्योंकि मिथ्याज्ञानविषयक ज्ञान का सम्यग्ज्ञानत्व अर्थात् प्रमात्व कदाचित् ही हो सकेगा, इसी आशय को स्पष्ट करने के लिये भाष्यकार ने '**प्रायेण**' शब्द का प्रयोग किया है। दूसरी बात यह है कि अवयवी की सत्ता न मानने पर दूसरों के द्वारा संघाताश्रितत्वरूप से स्वीकृत ज्ञान का भी रूपादि के समान मिथ्यात्व होने पर सभी ज्ञान 'ज्ञानत्व' हेतु के कारण भ्रमपूर्ण हो जायेंगे और '**सर्वं ज्ञानं भ्रमो ज्ञानत्वात्**' यह अनुमान-प्रयोग भी सम्भव हो जायेगा। इस प्रकार अवयवी की सत्ता न मानने वालों के मत का खण्डन करके भाष्यकार सम्प्रति, योगसिद्धान्त को उपसंहृत करते हैं–'**तस्मादिति**।' इस युक्ति से महान्, स्थूल इत्यादि व्यवहार वाला अवयवी पदार्थ है, जो निर्वितर्का समापत्ति का विषय बनता है। सवितर्का समापत्ति की कदाचित् विकल्प से भी उपपत्ति होती है, इस आशय से भाष्यकार ने यहाँ '**निर्वितर्कायाः**' पद का प्रयोग किया है। सरलार्थ यह है कि सविकल्प और निर्विकल्प दोनों प्रकार की सवितर्क समापत्ति का विषय स्थूल अवयवी होता है ॥४३॥

**बालप्रिया**–

'**ज्ञानज्ञानस्य**'–यहाँ ज्ञानविषयक ज्ञान का अभिप्राय मिथ्याज्ञानविषयक ज्ञान है। ऐसे ज्ञान का प्रमात्व नहीं होता है, क्योंकि व्यधिकरण में (मिथ्याज्ञान और ज्ञान दोनों के भिन्न अधिकरणों में रहने से) प्रकारकत्वाभाव रहता है। अतः भ्रान्त व्यक्ति का ज्ञान कभी अभ्रान्त नहीं हो सकता है ॥४३॥

अगला सूत्र है–

योगसूत्रम्

## एतयैव सविचारा निर्विचारा च[1] [2]सूक्ष्मविषया व्याख्याता॥४४॥

---

1. **च**–नोपलभ्यते।
2. **सूक्ष्मा**–इति पाठान्तरम्।

इस (सवितर्का और निर्वितर्का समापत्ति की व्याख्या) से ही सूक्ष्मविषयिणी 'सविचारा' और 'निर्विचारा' समापत्तियाँ भी व्याख्यात हो गईं ॥४४॥

**व्यासभाष्यम्**

**तत्र भूत[1]सूक्ष्मेष्वभिव्यक्तधर्मकेषु देशकालनिमित्तानुभवावच्छिन्नेषु या समापत्तिः सा सविचारेत्युच्यते। तत्राप्येकबुद्धिनिर्ग्राह्यमेवोदितधर्मविशिष्टं भूतसूक्ष्ममालम्बनीभूतं समाधिप्रज्ञायामुपतिष्ठते। या पुनः सर्वथा सर्वतः शान्तोदिताव्यपदेश्यधर्मानवच्छिन्नेषु सर्वधर्मानुपातिषु सर्वधर्मात्मकेषु [2]समापत्तिः सा निर्विचारेत्युच्यते। एवंस्वरूपं हि तद्भूतसूक्ष्ममेतेनै[3]व [4]स्वरूपेणालम्बनीभूतमेव समाधिप्रज्ञास्वरूपमुपरञ्जयति। प्रज्ञा च स्वरूपशून्ये[5]वार्थमात्रा यदा भवति तदा निर्विचारेत्युच्यते। तत्र [6]महद्वस्तुविषया सवितर्का निर्वितर्का च, सूक्ष्म[7]वस्तुविषया सविचारा निर्विचारा च। एवमुभयोरेतयैव निर्वितर्कया विकल्पहानिर्व्याख्यातेति॥४४॥**

उन (सविचारा तथा निर्विचारारूप समापत्तियों) में से अभिव्यक्त हुए धर्मों वाले तथा देश, काल और निमित्त के ज्ञान से विशिष्ट भूतसूक्ष्मों (तन्मात्राओं) में जो समापत्ति होती है, उसे 'सविचारा समापत्ति' कहते हैं। इस समापत्ति में भी (सवितर्का समापत्ति की भाँति) एक बुद्धि से ही गृहीत होने वाले, (तथा) उदित अर्थात् वर्तमानकाल के धर्मों से युक्त 'भूतसूक्ष्म' ध्येयरूप विषय को प्राप्त होकर समाधिप्रज्ञा में भासित होते हैं। और जो समापत्ति सब प्रकार से तथा सब ओर से भूत, वर्तमान और भविष्यत्कालिक धर्मों से रहित किन्तु सभी धर्मों का आश्रय बनने (की योग्यता) वाले अर्थात् सभी धर्मों के आधारभूत भूतसूक्ष्मों में होती है, उसे 'निर्विचारा समापत्ति' कहते हैं। इस प्रकार का (देशकालनिमित्तानुभव से रहित) वह भूतसूक्ष्म इसी

---

1. क ग घ च छ ज झ त थ द ध म प फ भ म य र – **सूक्ष्मेषु**, ख ब – **सूक्ष्मकेषु**।
2. छ थ – **उदितधर्मशून्येषु (समापत्तिः पूर्वम्)** उपलभ्यते, क ख ग घ च ज झ त द ध न प फ ब भ म य र – **उदितधर्मशून्येषु** नोपलभ्यते।
3. क ख ग घ च छ ज झ त थ ध न प फ ब भ म य र – **एव**, द – **एवम्**।
4. क ग घ च छ ज झ त थ द ध न प फ ब भ म य र – **स्वरूपेण**, ख – **ग्राह्यरूपेण**।
5. क ख ग घ च छ झ त थ द ध न प फ ब भ म य र – **इव**, ज – **एव**।
6. क ख ग घ च छ ज झ त थ द ध न फ ब भ म य र – **महत्**, प – **महा**।
7. क ख ग च छ ज झ त थ द ध न ब भ म य – **वस्तु०** उपलभ्यते, घ प फ र – **वस्तु०** नोपलभ्यते।

रूप से (समाधि का) आलम्बन बनकर ही समाधि-प्रज्ञा के स्वरूप को उपरक्त करता है। इस प्रकार यह प्रज्ञा जब स्वरूपरहित सी होकर केवल ध्येयाकारमात्र होकर रहती है, तब यह 'निर्विचारा समापत्ति' कही जाती है। इन चार समापत्तियों में 'सवितर्का' तथा 'निर्वितर्का' समापति स्थूल पदार्थ को अपना विषय बनाती है और 'सविचारा' तथा 'निर्विचारा' समापत्ति सूक्ष्म पदार्थ को अपना विषय बनाती है। इस प्रकार से निर्वितर्का और निर्विचारा - इन दोनों में विकल्पराहित्य, इस निर्वितर्का समापत्ति के द्वारा प्रतिपादित किया गया है॥४४॥

### तत्त्ववैशारदी

**एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता। अभिव्यक्तो घटादिर्धर्मो यैस्ते तथोक्ताः। घटादिधर्मोपगृहीता इति यावत्। देश उपर्यधःपार्श्वादिः। कालो वर्तमानः। निमित्तं पार्थिवस्य परमाणोर्गन्धतन्मात्रप्रधानेभ्यः पञ्चतन्मात्रेभ्य उत्पत्तिः। एवमाप्यस्य परमाणोर्गन्धतन्मात्रवर्जितेभ्यो रसतन्मात्रप्रधानेभ्यश्चतुर्भ्यः। एवं तैजसस्य [1]परमाणोः गन्ध-रसतन्मात्ररहितेभ्यो रूपतन्मात्रप्रधानेभ्यस्त्रिभ्यः। एवं वायवीयस्य गन्धादितन्मात्ररहिताभ्यां स्पर्शप्रधानाभ्यां स्पर्शशब्दतन्मात्राभ्याम्। एवं नाभसस्य शब्दतन्मात्रादेवैकस्मात्। तदिदं निमित्तं भूतसूक्ष्माणाम्। एतेषां देशकालनिमित्तानामनुभवः, तेनावच्छिन्नेषु। नाननुभूतविशेषणा [2]विशेष्ये बुद्धिरुपजायत इत्यर्थः।**

**'एतयैवेति।'** जिनसे घटादि धर्म अभिव्यक्त होता है, इस प्रकार के भूतसूक्ष्म अभिव्यक्तधर्मक कहे जाते हैं। इस प्रकार **'अभिव्यक्तधर्म'** पद से घटादिधर्म (कार्य) का संग्रह होता है। **'देश'** शब्द का अर्थ है—ऊपर, नीचे, पार्श्वादि। **'काल'** शब्द का अर्थ है—वर्तमान। **'निमित्त'** शब्द का अर्थ है—उत्पत्ति (परिणामप्रयोजक), जैसे गन्धतन्मात्रप्रधान पञ्चतन्मात्राओं से पार्थिव परमाणु की उत्पत्ति होती है। इसी प्रकार गन्धतन्मात्र से रहित रसतन्मात्रप्रधान चार तन्मात्राओं से जलीय परमाणु की उत्पत्ति होती है। इसी प्रकार गन्ध तथा रसतन्मात्र से रहित रूपतन्मात्रप्रधान तीन तन्मात्राओं से तैजस परमाणु की उत्पत्ति होती है। इसी प्रकार गन्ध, रस तथा रूपतन्मात्र से रहित स्पर्शतन्मात्रप्रधान दो तन्मात्राओं से वायवीय परमाणु की उत्पत्ति होती है। इसी प्रकार एकाकी शब्दतन्मात्र से आकाशीय परमाणु की उत्पत्ति होती है। इस प्रकार भूतसूक्ष्म **'निमित्त'** बनते हैं अर्थात् यही भूतसूक्ष्मों का निमित्तत्व है। सम्पूर्ण वाक्य का अर्थ इस प्रकार है कि—देश, काल और निमित्त के अनुभव से

---

1. थ द ध – **परमाणोः** उपलभ्यते (उभयत्र), क ख ग घ च छ ज झ त न – **परमाणोः** नोपलभ्यते (उभयत्र)।
2. क ख ग घ च छ ज झ त न – **विशेष्ये बुद्धिः**, थ द ध – **बुद्धिर्विशेष्ये**।

अवच्छिन्न, अभिव्यक्त घटादि धर्म वाले भूतसूक्ष्मों में जो समापत्ति होती है, वह **'सविचारा'** कही जाती है। (तात्पर्य यह है कि) विशेष्यरूप भूतसूक्ष्म में अननुभूत विशेषण वाली बुद्धि उत्पन्न नहीं होती है। अर्थात् अभिव्यक्ति, देश, कालादि विशेषणों (धर्मों) के ज्ञान के विना केवल भूतसूक्ष्मरूप विशेष्य का ज्ञान नहीं हो सकता है।

**बालप्रिया–**

**'पार्थिवस्य परमाणो...तन्मात्रेभ्य उत्पत्तिः'**–इस वाक्य से सुस्पष्ट है कि तन्मांत्र से पार्थिवादि परमाणु की उत्पत्ति (अभिव्यक्ति) होती है। इनमें कार्यकारणभावसम्बन्ध है। अतः 'तन्मात्र' को परमाणु का पर्याय नहीं समझना चाहिये। तन्मात्र और परमाणु दोनों भिन्न हैं।

**'गन्धादितन्मात्ररहिताभ्याम्'**–इस में 'आदि' पद से रसतन्मात्र और रूपतन्मात्र का ग्रहण किया जाता है।

### तत्त्ववैशारदी

**ननु सवितर्कया सह किं सारूप्यं सविचाराया इत्यत आह–तत्रापीति।** पार्थिवो हि **परमाणुः पञ्चतन्मात्रप्रचयात्मैकबुद्धिनिर्ग्राह्यः। एवमाप्यादयोऽपि चतुस्त्रिद्व्येकतन्मात्रात्मान एकबुद्धिनिर्ग्राह्या वेदितव्याः। उदितो वर्तमानो धर्मस्तेन विशिष्टम्।** एतावता चात्र संकेतस्मृ-त्यागमानुमानविकल्पानुवेधः सूचितः। न हि प्रत्यक्षेण स्थूले दृश्यमाने परमाणवः प्रकाशन्ते, **अपि त्वागमानुमानाभ्याम्। तस्मादुपपन्नमस्याः संकीर्णत्वमिति।**

**शङ्का**–(पूर्वकथित) 'सवितर्का समापत्ति' के साथ 'सविचारा समापत्ति' का किस अंश में सारूप्य (समानधर्मता) है?

**समाधान**–उक्त शंका के समाधानार्थ भाष्यकार कहते हैं–**'तत्रापीति'**। पार्थिव परमाणु पञ्चतन्मात्रात्मक होता हुआ भी एक बुद्धि से गृहीत होता है अर्थात् एक बुद्धि का विषय बनता है। इसी प्रकार जलीयादि परमाणु भी (क्रमशः) चार, तीन, दो तथा एकतन्मात्रात्मक होते हुए भी एक बुद्धि से गृहीत (जानने योग्य) होते हैं। **'उदित'** शब्द का अर्थ है–वर्तमानधर्म, अर्थात् भूतसूक्ष्म वर्तमानधर्मविशिष्ट होता है। इससे इस सविचारा समापत्ति में भी संकेतस्मृति, आगम, अनुमान तथा विकल्पानु-**बिद्धता** सूचित होती है। प्रत्यक्ष प्रमाण से (परमाणुनिर्मित) स्थूल पदार्थ के दिखाई पड़ने पर भी परमाणुओं का प्रत्यक्ष नहीं होता है। अपितु आगम और अनुमान प्रमाण से परमाणुओं का ज्ञान होता है। इस प्रकार (सवितर्का समापत्ति की भाँति) प्रस्तूयमान सविचारा समापत्ति में भी संकीर्णत्व उपपन्न होता है।

**बालप्रिया–**

**'तस्मादुपपन्नमस्याः संकीर्णत्वमिति'**–भाव यह है कि सवितर्क और निर्वितर्करूप स्थूल-

विषयक समापत्ति से; ध्येय विषय में शब्दादि का अभेदाध्यास और अनध्यासरूप साम्य रहने से, सूक्ष्मविषयक सविचार और निर्विचार समापत्ति भी कह दी गई है, ऐसा समझना चाहिये। परमाणुविषयिणी सविचारा समापत्ति में 'परमाणु' यह सूक्ष्म शब्द है, 'परमाणु' यह सूक्ष्म अर्थ (विषय) है और 'परमाणु' यह सूक्ष्म शाब्दबोध है। इस प्रकार योगिजन तीनों का योगाभ्यास के सामर्थ्य से प्रत्यक्ष करते हैं। यद्यपि ये रूपादि परमाणु शब्द, अर्थ और ज्ञान की दृष्टि से स्वभावतः भिन्न-भिन्न हैं तथापि 'परमाणु' इस सूक्ष्म शब्द से 'परमाणु' अर्थ और 'परमाणु' ज्ञान का जो सम्बन्ध होता है। यही सूक्ष्म शब्द का सूक्ष्म अर्थ और सूक्ष्म शाब्दबोध के साथ साङ्कर्य है। अतएव इतरेतराध्यासात्मक सङ्कीर्णता के प्रभाव से वस्तुतः परस्पर भिन्नों का आध्यासिक अभेद के रूप से जो ग्रहण होता है, वही सङ्कीर्ण सविचारसमापत्ति है।

सम्प्रति, निर्विचारसमापत्ति को उठाते हुए तत्त्ववैशारदीकार कहते हैं–

तत्त्ववैशारदी

**निर्विचारामाह–या पुनरिति। सर्वथा सर्वेण नीलपीतादिना प्रकारेण। सर्वत इति हि सार्वविभक्तिकस्तसिः, सर्वैर्देशकाल[1]निमित्तानुभवैरित्यर्थः। तदनेन स्वरूपेण कालानवच्छेदः परमाणूनामिति दर्शितम्। नापि तदारब्धधर्मद्वारेणेत्याह–शान्तेति। शान्ता अतीता। उदिता वर्तमाना अव्यपदेश्या भविष्यन्तो धर्मास्तैरनवच्छिन्नेषु। नन्वनवच्छिन्ना धर्मैः परमाणवः किमसंबद्धा एव तैरित्यत आह–सर्वधर्मानुपातिष्विति। कतमेन संबन्धेन धर्माननुपतन्ति परमाणव इत्यत आह–सर्वधर्मात्मकेष्विति। कथंचिद्भेदः कथंचिदभेदो धर्माणां परमाणुभ्य इत्यर्थः। कस्मात्पुनरियं समापत्तिरेतद्विषयेत्यत आह–एवंस्वरूपं हीति। वस्तुतत्त्वग्राहिणी नातत्त्वे प्रवर्तत इत्यर्थः। विषयमभिधायास्याः स्वरूपमाह–प्रज्ञा चेति। संकलय्य स्वरूपभेदोपयोगिविषयमाह–तत्रेति। उपसंहरति–एवमिति उभयोरात्मनश्च निर्विचारायाश्चेति॥४४॥**

भाष्यकार निर्विचारसमापत्ति को बतलाते हैं–'**या पुनरिति**।' (भाष्य में प्रयुक्त) '**सर्वथा**' पद का अर्थ है–नील, पीतादि सभी प्रकार से। '**सर्वतः**' में सभी विभक्तियों में होने वाला '**तसिल्**' प्रत्यय है। अतः '**सर्वतः**' का अर्थ है–सम्पूर्ण देश, काल तथा निमित्त के ज्ञान से। इस प्रकार परमाणुओं की काल से स्वरूपतः अनवच्छिन्नता बताई गई है। और आरब्ध धर्म के द्वारा भी परमाणुओं का कालावच्छेद नहीं होता है, इसी तथ्य को भाष्यकार बतलाते हैं–'शान्तेति।' '**शान्त**' अतीत को कहते हैं, '**उदित**' वर्तमान को कहते हैं और '**अव्यपदेश्य**' भविष्यत् को कहते हैं–ऐसे शान्त, उदित और अव्यपदेश्य धर्मों से अनवच्छिन्न परमाणुओं में जो समापत्ति होती है, वह निर्विचारा समापत्ति कही जाती है।

1. **क ख ग घ च छ झ त थ द ध न निमित्त॰** उपलभ्यते, ज – **निमित्त॰** नोपलभ्यते।

**शङ्का**–तो फिर 'शान्तादि' धर्मों से अनवच्छिन्न परमाणु क्या 'शान्तादि' धर्मों से असम्बद्ध ही रहते हैं?

**समाधान**–उक्त शंका के समाधानार्थ भाष्यकार कहते हैं–'**सर्वधर्मानुपातिष्विति**।' अर्थात् ये परमाणु शान्तादि सभी धर्मों से अनुगत (अन्वित) रहते हैं।

**शङ्का**–किस सम्बन्ध से ये परमाणु धर्मानुपाती होते हैं?

**समाधान**–इस पर भाष्यकार कहते हैं–'**सर्वधर्मात्मकेष्विति**।' ये परमाणु शान्तादि सभी धर्मों के आश्रय के रूप में (सर्वधर्मात्मक) हैं। अर्थात् शान्तादि धर्मों का परमाणुओं से किसी अंश में '**भेद**' है और किसी अंश में '**अभेद**' है।

**शङ्का**–किस कारण से यह समापत्ति भूतसूक्ष्मविषयक है?

**समाधान**–इस पर भाष्यकार कहते हैं–'**एवं स्वरूपं हीति**।' (तात्पर्य यह है कि) यथार्थ वस्तु (भूतसूक्ष्म) को ग्रहण करने वाली यह समापत्ति अतात्त्विक पदार्थ में प्रवृत्त नहीं होती है। अर्थात् इस प्रकार के देश, काल और निमित्तानुभव से रहित वह भूतसूक्ष्म अपने यथार्थरूप से आलम्बन बनकर ही समाधि-प्रज्ञा के स्वरूप से उपरक्त होता है। निर्विचारा समापत्ति के विषय का निरूपण करके भाष्यकार उसके स्वरूप का निर्देश करते हैं–'**प्रज्ञा चेति**।' जब यह प्रज्ञा स्वरूपरहित सी होकर ध्येयाकारमात्र रहती है, तब 'निर्विचारा समापत्ति' कहलाती है। सम्प्रति, भाष्यकार (दोनों सूत्रों को) पिण्डीकृत करके सवितर्कादि के स्वरूप-भेद के उपयोगी विषय का विभाग करते हैं–'**तत्रेति**।' इनमें स्थूलविषयक=महद्वस्तुविषयक समापत्तियाँ 'सवितर्का' और 'निर्वितर्का' हैं तथा सूक्ष्मवस्तुविषयक समापत्तियाँ 'सविचारा' और 'निर्विचारा' हैं। विषय का उपसंहार करते हुए भाष्यकार कहते हैं–'**एवमिति**।' इस प्रकार पूर्वोक्त निर्वितर्का समापत्ति के द्वारा ही दोनों अर्थात् स्वयं अपनी (निर्वितर्का) तथा निर्विचारा समापत्ति में शब्दार्थज्ञानविकल्पशून्यत्व (विकल्पराहित्य) प्रतिपादित हो जाता है॥४४॥

## योगवार्त्तिकम्

**तदेवं स्थूलविषये सूत्रद्वयेन समापत्तेर्द्विधा विभागं कृत्वा सूक्ष्मविषयेऽपि तस्या द्वैविध्यमतिदिशति–एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता। एतया सवितर्कनिर्वितर्करूपया स्थूलविषयकसमापत्त्या, सूक्ष्मविषयाऽपि सविचारनिर्विचाररूपा समापत्तिद्वयी व्याख्याता, [1]अन्योपरागा[2]नुपरागसाम्येनेत्यर्थः। [3]वितर्कविचारेत्यादिसूत्रे सूक्ष्म-**

---

1. क घ – अर्थ०, ख ग च छ – अन्य०।
2. क ग घ च छ – अनुपराग० उपलभ्यते, ख – अनुपराग० नोपलभ्यते।
3. अ – क ग घ च छ – वितर्कविचारेत्यादिसूत्रे सूक्ष्मविषयकाभोगो विचार इत्युक्तम्, स एवात्र सविचारनिर्विचाररूपेण द्विधोच्यत इति स्मर्त्तव्यम् उपलभ्यते, ख – वितर्क...स्मर्त्तव्यम्

**विषयकाभोगो विचार इत्युक्तम्, स एवात्र सविचारनिर्विचाररूपेण द्विधोच्यत इति स्मर्त्तव्यम्। [1]कालाद्युपरागानुपरागयुक्तां समापत्तिं द्विधा विभजते—तत्र भूतसूक्ष्मेष्विति। अत्र भूतशब्द इन्द्रियाणामप्युपलक्षकः, सामान्यत एव सूक्ष्मविषयत्वेनास्याः समापत्तेः भाष्ये व्याख्येयत्वात्। भूतेन्द्रियाणां यत्सूक्ष्मं कारणं तत् तन्मात्रादिप्रकृतिपर्यन्तं सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम् इत्यागामिसूत्रात्, तेषु वर्त्तमानधर्मविशिष्टेषु तथा देशकालनिमित्तैर्विशिष्टतयाऽनुभूयमानेषु या समापत्तिः सा सविचारेत्युच्यत इत्यर्थः। अत्र देश उपर्यधःपार्श्वादिः, कालो वर्त्तमानादिः, निमित्तं परिणामप्रयोजकः पुरुषार्थविशेष इति। पूर्ववदेवात्रायवयवातिरिक्तस्तन्मात्रादिरूपोऽवयवी समापत्तेर्विषय इत्याह—[2]अत्रापीति। उदितो वर्त्तमानः, उपतिष्ठते=आरूढं भवति।**

इस प्रकार दो सूत्रों द्वारा '**स्थूल**' विषय में समापत्ति का द्वैविध्य प्रतिपादित करके सूत्रकार '**सूक्ष्म**' विषय में भी समापत्ति की द्विविधता का अतिदेश करते हैं–'**एतयैवेति।**' स्थूलविषयिणी सवितर्का-निर्वितर्का-समापत्ति से सूक्ष्मविषयिणी सविचारा-निर्विचारा-समापत्ति को भी अभिहित (व्याख्यात) समझ लेना चाहिये, क्योंकि चाहे स्थूलविषयिका वितर्कानुगतसमापत्ति हो अथवा सूक्ष्मविषयिका विचारानुगतसमापत्ति हो दोनों में देश, कालादि से उपराग और अनुपराग होने की तुल्यता रहती है। ऐसा स्मरण रखना चाहिये कि '**वितर्कविचार...**' (१/१७) सूत्र में जिस सूक्ष्म-विषयक आभोग को '**विचार**' संज्ञा से अभिहित किया गया है, उसी का यहाँ सविचार और निर्विचार के रूप से प्रतिपादन किया जा रहा है। भाष्यकार कालादि के उपराग और अनुपराग से युक्त सूक्ष्मविषयिणी सविचारा समापत्ति को दो प्रकार से विभाजित करते हैं–'**तत्र भूतसूक्ष्मेष्विति।**' भाष्य में प्रयुक्त '**भूत**' शब्द इन्द्रियों का भी उपलक्षक है, क्योंकि भाष्य में सामान्यतः सूक्ष्मविषयत्व की दृष्टि से ही प्रकृत समापत्ति की व्याख्या की गई है। भूतेन्द्रियों का जो सूक्ष्म कारण है, वह तन्मात्र से लेकर प्रकृतिपर्यन्त (तत्त्वों का संग्राहक) है, क्योंकि '**सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम्**' (१/४५) ऐसा आगामी सूत्र प्राप्त होता है। इन वर्तमान (अभिव्यक्त) धर्मविशिष्ट तथा देश, काल और निमित्तों के द्वारा विशिष्टतया अनुभूत होने वाले तन्मात्रादि सूक्ष्म तत्त्वों में जो समापत्ति होती है, उसे '**सविचारा समापत्ति**' कहते हैं। यहाँ '**देश**' शब्द का अर्थ ऊपर, नीचे पार्श्वादि है; '**काल**' शब्द का अर्थ वर्तमानादि है तथा '**निमित्त**' शब्द का अर्थ परिणाम का हेतुभूत पुरुषार्थविशेष है। वितर्कानुगत समापत्ति

---

नोपलभ्यते। आ – क ग – **उक्तः**, घ च छ – **उक्तम्।** इ – क ग – **समापत्तिरूपेण**, घ च छ – **रूपेण।**

1. क ख ग घ च छ – **कार्य०**, छ – **काल०।**
2. क ग घ च छ – **अत्र**, ख – **तत्र।**

की भाँति इस विचारानुगत समापत्ति का भी अवयवातिरिक्त अर्थात् अवयव से भिन्न तन्मात्रादिरूप **'अवयवी'** ही विषय होता है, इस तथ्य का उपपादन भाष्यकार करते हैं—**'अत्रापीति।'** भाष्य में प्रयुक्त **'उदित'** शब्द का अर्थ है—वर्तमान। **'उपतिष्ठते'** इस क्रियापद का अर्थ है—आरूढ होता है। सम्पूर्ण वाक्य का अर्थ है—यहाँ पर भी एक बुद्धि से ही गृहीत होने वाले, वर्तमान काल के धर्मों से युक्त तथा आलम्बनीभूत भूतों के सूक्ष्मरूप तन्मात्रादि समाधि में उपारूढ होते हैं।

सम्प्रति, वार्त्तिककार विचारानुगतसमापत्ति के द्वितीय भेद पर विचार करते हैं—

## योगवार्त्तिकम्

**सविचारां व्याख्याय निर्विचारां व्याचष्टे—या पुनरिति। या तु सर्वथा सर्वैः स्वरूपैः, सर्वतो देशकालाद्यनवच्छेदतः समापत्तिः शान्तोदिताव्यपदेश्यधर्मानवच्छिन्नेष्वतीतवर्त्तमान-भविष्यद्धर्मैरनवच्छिन्नेष्व[1]तीतवर्तमानभूतसूक्ष्मेषु जायते सा निर्विचारा। अनवच्छिन्नशब्द-स्या[2]संबद्धार्थत्वनिरासाय विशेषणद्वयम्—सर्वधर्मेत्यादि। सर्वधर्मानुगतेषु सर्वधर्माणामाश्रयेषु चेत्यर्थः।**

इस प्रकार 'सविचारा समापत्ति' की व्याख्या करके भाष्यकार निर्विचारा समापत्ति को बताते हैं—**'या पुनरिति।'** जो समापत्ति **'सर्वथा'** अर्थात् नील, पीतादि सभी स्वरूपों तथा **'सर्वतः'** अर्थात् देश, कालादि सभी प्रकार के अवच्छेद से रहित है, और शान्त-उदित-अव्ययदेश्य धर्मों से अनवच्छिन्न अर्थात् अतीत-वर्तमान-भविष्यत् धर्मों से रहित अतीत और वर्तमानकालिक भूतसूक्ष्मों में होती है, उसे 'निर्विचारा समापत्ति' कहते हैं। **'अनवच्छिन्न'** शब्द के असम्बद्धार्थत्व का खण्डन करने के लिये भाष्यकार ने यहाँ दो विशेषण पदों का प्रयोग किया है—**'सर्वधर्मेत्यादि।'** ये दो विशेषणभूत पद हैं—**'सर्वधर्मानुपातिषु'** तथा **'सर्वधर्मात्मकेषु।'** पहले पद का अर्थ है—सब धर्मों से युक्त रहने वाले तथा दूसरे पद का अर्थ है—सब धर्मों के आश्रयभूत। ये दोनों सप्तम्यन्त पद **'भूतसूक्ष्मेषु'** इस विशेष्यभूत पद के विशेषण हैं। ऐसे भूतसूक्ष्मों में होने वाली समापत्ति को 'निर्विचारा समापत्ति' कहते हैं।

सम्प्रति, योगवार्त्तिककार 'निर्वितर्क' और 'निर्विचार' के साम्य को प्रतिपादित करते हुए प्रकृत विषय को उपसंहृत करते हैं—

---

1. घ च छ – **अतीतवर्तमान०** उपलभ्यते, क ख ग – **अतीतवर्तमान०** नोपलभ्यते।
2. ख ग – **भ्रम०** ( **असंबद्धार्थत्व०** पश्चात्) उपलभ्यते, क घ च छ – **भ्रम०** नोपलभ्यते।

## योगवार्त्तिकम्

निर्वितर्कसाम्यमस्याः प्रतिपादयति—एवंस्वरूपं हीति। पूर्वसूत्रानुसारेणै[1]तद्व्याख्येयम्। उक्तस्य समापत्तिचतुष्टयस्य विषयविभागमाह—तत्रेति। महत् स्थूलं केवलविकृतिरिति यावत्। तेनेन्द्रियाणां भूतपरमाणूनां च संग्रहः। भूतपरमाणूनां च सूक्ष्ममध्ये प्रवेशो वक्तुं न शक्यते, आगामिसूत्रे पार्थिवस्याणोर्गन्धतन्मात्रं सूक्ष्म इत्यादिना तन्मात्रादीनामेव सूक्ष्मत्वस्य वक्ष्यमाणत्वात्, सूक्ष्मत्वं च तत्त्वान्तरकारणत्वम्। तच्च जलादि[2]भूतचतुष्टयव्यावृत्त्यर्थं बहिरिन्द्रियग्राह्यगुणराहित्येन विशेषणीयम्। वस्तुतस्तु अष्टप्रकृतिसिद्धान्ताद् भूतान्युत्तरभूतेष्वाधारकारणान्येव, न तु प्रकृतयः। अतोऽत्र तत्त्वान्तरप्रकृतित्वमेव सूक्ष्मत्वमिति। ननु शब्दार्थज्ञानविकल्पम[3]संकीर्णत्वमेव कथमेतयैवेत्यनेन नातिदिश्यते? तत्राह—एवमुभयोरेतयैव निर्वितर्कया विकल्पहानिर्व्याख्यातेति। एवंस्वरूपमिव विकल्पहानिरपि=[4]यथोक्तविकल्पराहित्यमप्युभयोः सविचारनिर्विचारयोरेतयैव पूर्वोक्तया [5]निर्वितर्कया यथोक्तविकल्पशून्यया सूत्रकारेण व्याख्यातप्रायेत्यर्थः, पूर्वभूमिकायां त्यक्तविकल्पस्योत्तरभूमिकायामसंभवादिति ॥४४॥

सम्प्रति, भाष्यकार प्रस्तूयमान निर्विचारा समापत्ति का निर्वितर्का समापत्ति से साम्य प्रतिपादित करते हैं—'**एवं स्वरूपं हीति**।' पूर्व सूत्र के अनुसार इसकी भी व्याख्या कर लेनी चाहिये। भाष्यकार उक्त समापत्तिचतुष्टय के विषयविभाग को बतलाते हैं—'**तत्रेति**।' भाष्य में प्रयुक्त '**महत्**' शब्द से स्थूल अर्थात् केवलविकृतिरूप (एक मात्र कार्यरूप) तत्त्व का ग्रहण होता है। इस स्थूलवाची '**महत्**' शब्द के द्वारा इन्द्रिय तथा भूतपरमाणुओं का संग्रह होता है। इन पृथिव्यादि भूतपरमाणुओं को सूक्ष्मविषय के अन्तर्गत नहीं रख सकते हैं, क्योंकि (अव्यवहित) आगामी सूत्र में '**पार्थिवस्याणोर्गन्धतन्मात्रं सूक्ष्मः**' इस भाष्य के द्वारा तन्मात्रादिकों का ही सूक्ष्मत्व वक्ष्यमाण है और यह सूक्ष्मत्व तत्त्वान्तरकारणत्वरूप है अर्थात् जिससे तत्त्वान्तराभिव्यक्ति होती है, उसे ही यहाँ सूक्ष्म पदवाच्य माना गया है। ऐसे तत्त्वान्तरकारणत्वरूप सूक्ष्मत्व को जलादि चार भूतपरमाणुओं से भी व्यावृत्त करने के लिये '**बहिरिन्द्रियग्राह्यगुणराहित्य**' (अर्थात् जो बहिरिन्द्रिय द्वारा ग्राह्यगुण से रहित होता है—इत्याकारक) विशेषण से विशेषित करना चाहिये। वस्तुतस्तु पृथिव्यादि पांच भूत उत्तरोत्तर भूतात्मक (घट, वृक्षादि) कार्यों के आधारभूत कारण ही हैं, न कि

1. क ख घ च छ – एतत्, ग – एव तत्।
2. क ख ग – भूत० उपलभ्यते, घ च छ – भूत० नोपलभ्यते।
3. क ख ग घ – संकीर्णत्वमसंकीर्णत्वं, च छ – असंकीर्णत्वम्।
4. क ग घ च छ – यथोक्तविकल्पराहित्यं, ख – शब्दार्थज्ञानविकल्पं।
5. क ग घ च छ – निर्वितर्कया, ख – निर्विकल्पया।

प्रकृतिरूप कारण। क्योंकि सांख्ययोगशास्त्र में (प्रकृति, महत्, अहंकार तथा पञ्चतन्मात्रात्मक) अष्ट प्रकृति का सिद्धान्त स्वीकृत है। अतः यह सिद्धान्तित होता है कि सांख्ययोगशास्त्र में **'तत्त्वान्तरप्रकृतित्व'** में ही **'सूक्ष्मत्व'** विवक्षित है।

**शङ्का**–प्रस्तुत सूत्र के द्वारा विगत दो सूत्रों में कथित शब्दार्थज्ञान के विकल्प की असंकीर्णता का अतिदेश ही क्यों नहीं किया जा रहा है?

**समाधान**–इस पर भाष्यकार कहते हैं–**'एवमुभयोरेतयैव निर्वितर्कया विकल्पहानिर्व्याख्यातेति।' 'एतया'** अर्थात् यथोक्त विकल्प से शून्य पूर्वोक्त 'निर्वितर्का समापत्ति' के द्वारा सूत्रकार ने तथाकथित विकल्पराहित्य को इन दोनों सविचारा और निर्विचारा समापत्तियों में भी व्याख्यातप्राय कर दिया है, क्योंकि पूर्व भूमिका में व्यक्त विकल्प उत्तरभूमिका में सम्भव नहीं हो सकता है॥४४॥

**बालप्रिया–**

**'एतयैव निर्वितर्कया विकल्पहानिर्व्याख्याता'–मिश्र-भिक्षु-मतभेद**–शब्दार्थज्ञानविकल्पशून्यत्व; सवितर्क, निर्वितर्क सविचार और निर्विचारसंज्ञक किन-किन समापत्तियों का स्वरूप है, इस विषय में वाचस्पति मिश्र और विज्ञानभिक्षु में मतभेद है। वाचस्पति मिश्र ने भाष्योक्त **'उभयोः'** पद का अर्थ **'आत्मनश्च निर्विचारायाश्चेति'** करते हुए स्वमन्तव्य को इस प्रकार प्रस्तुत किया है कि पूर्वसूत्र द्वारा प्रतिपादित निर्वितर्का समापत्ति से ही स्वयं उसका (निर्वितर्का) तथा निर्विचारा समापत्ति का शब्दार्थ-विकल्पशून्यत्व सिद्ध होता है। इस प्रकार वाचस्पति मिश्र ने विकल्पशून्यत्व को निर्वितर्का और निर्विचारा समापत्तियों में ही माना है। विज्ञानभिक्षु ने भाष्यगत **'उभयोः'** पद को सविचारा और निर्विचारा दोनों का बोधक मानते हुए विकल्पशून्यत्व को निर्वितर्का तथा निर्विचारा समापत्ति की भाँति सविचारा में भी स्वीकार किया है। सविचारा समापत्ति में विकल्पसङ्कीर्णत्व का खण्डन करते हुए विज्ञानभिक्षु ने यह तर्क दिया है कि निर्वितर्क में त्यक्त विकल्प उत्तरोत्तर भूमियों में सम्भव ही नहीं हो सकता है। वस्तुतस्तु सविचारा समापत्ति में विकल्पसङ्कीर्णत्व है, न कि विकल्पशून्यत्वाभाव। व्यासभाष्यानुसारी होने से वाचस्पति मिश्र का मत आदरणीय है तथा विज्ञानभिक्षु की यह पंक्ति **'अन्योपरागानुपरागसाम्येनेत्यर्थः'**–प्रश्न चिह्न बनकर रह जाती है॥४४॥

अगला सूत्र है–

**योगसूत्रम्**

## सूक्ष्मविषयत्वं [1]चालिङ्गपर्यवसानम्॥४५॥

---

1. **वा**–इति पाठान्तरम्।

और (सविचारा तथा निर्विचारा समापत्ति की यह) सूक्ष्मविषयता अलिङ्ग (प्रकृति) पर्यन्त है॥४५॥

### व्यासभाष्यम्

**पार्थिवस्याणोर्गन्धतन्मात्रं सूक्ष्मो विषयः, आप्यस्य रसतन्मात्रम्, तैजसस्य रूपतन्मात्रम्, वायवीयस्य स्पर्शतन्मात्रम्, आकाशस्य शब्दतन्मात्रमिति। तेषामहंकारः; अस्यापि लिङ्गमात्रं सूक्ष्मो विषयः। लिङ्गमात्रस्याप्यलिङ्गं सूक्ष्मो विषयः। न चालिङ्गात्परं सूक्ष्ममस्ति। नन्वस्ति पुरुषः सूक्ष्म इति? [1]सत्यम्। यथा लिङ्गात्परमलिङ्गस्य सौक्ष्म्यं न चैवं पुरुषस्य। किं तु [2]लिङ्गस्यान्वयिकारणं पुरुषो न भवति, हेतुस्तु भवतीति। अतः प्रधाने सौक्ष्म्यं निरतिशयं व्याख्यातम्॥४५॥**

पार्थिव अणु का सूक्ष्मविषय 'गन्धतन्मात्र' है, जलीय अणु का सूक्ष्म विषय 'रसतन्मात्र' है, तैजस अणु का सूक्ष्म विषय 'रूपतन्मात्र' है, वायवीय अणु का सूक्ष्म विषय 'स्पर्शतन्मात्र' है तथा आकाश का सूक्ष्म विषय 'शब्दतन्मात्र' है। इन पञ्च तन्मात्राओं का सूक्ष्म विषय 'अहंकार' है। अहंकार का भी सूक्ष्म विषय 'लिङ्गमात्र' (बुद्धि) है। इस महत्तत्त्व (बुद्धि) का भी सूक्ष्म विषय 'अलिङ्ग' (प्रकृति) है। (किन्तु) अलिङ्ग (मूल प्रकृति) से अधिक (परे) सूक्ष्म विषय और कोई नहीं है।

**शङ्का**–'पुरुष' तो 'प्रकृति' की भी अपेक्षा अधिक सूक्ष्म है? (अतः प्रकृति से अधिक सूक्ष्म कोई दूसरा तत्त्व नहीं है–यह कथन अविवेकपूर्ण है)।

**समाधान**–यह शंका तो उचित है। फिर भी जिस प्रकार की सूक्ष्मता 'महत्तत्त्व' से परे 'अव्यक्त' की है, वैसी सूक्ष्मता (अव्यक्त की तुलना में) 'पुरुष' की नहीं है। क्योंकि पुरुष (प्रकृति के समान) महत्तत्त्व (लिङ्ग) का उपादानकारण (अन्वयिकारण) नहीं है, वह तो निमित्तकारणमात्र है। इसीलिये प्रधान में सूक्ष्मता की पराकाष्ठा (सर्वाधिक सूक्ष्मता) बतलाई गई है॥४५॥

### तत्त्ववैशारदी

**किं भूतसूक्ष्म एव ग्राह्यविषया समापत्तिः समाप्यते? न। किन्तु–सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम्। पार्थिवस्य परमाणोः संबन्धिनी या गन्धतन्मात्रता सा समापत्तेः सूक्ष्मो विषयः। एवमुत्तरत्रापि योज्यम्। लिङ्गमात्रं महत्तत्त्वम्, तद्धि लयं गच्छति प्रधान इति। अलिङ्गं प्रधानम्, तद्धि न क्वचिल्लयं गच्छतीत्यर्थः। अलिंगपर्यवसानत्वमाह–न चालिङ्गात्परमिति। चोदयति–नन्विति। पुरुषोऽपि सूक्ष्मो नालिङ्गमेवेत्यर्थः। परिहरति–सत्यमिति। उपादानतया**

---

1. क ख ग घ च छ ज त थ द ध न प फ ब भ म प र – सत्यं, झ – स यथा।
2. क ख ग घ च ज झ त थ द ध न प फ ब भ म य र – लिङ्गस्य, छ – अलिङ्गस्य।

**सौक्ष्म्यमलिङ्ग एव नान्यत्रेत्यर्थः। तत्र पुरुषार्थनिमित्तत्वान्महदहंकारादेः पुरुषोऽपि कारणमलिङ्गवदिति कुत एवंलक्षणमलिङ्गस्यैव सौक्ष्म्यमित्याशयवान्पृच्छति–किं त्विति। उत्तरमाह–लिङ्गस्येति। सत्यं कारणं न तूपादानम्। यथा हि प्रधानं महदादिभावेन परिणमते न तथा पुरुषस्तद्धेतुरपीत्यर्थः। उपसंहरति–अतः प्रधान एव सौक्ष्म्यं निरतिशयं व्याख्यातमिति॥४५॥**

**शङ्का**–ग्राह्यविषयक समापत्ति क्या भूतसूक्ष्म में ही समाप्त हो जाती है अर्थात् भूतसूक्ष्मपर्यन्त ही यह समापत्ति है? (यद्यपि सवितर्क, निर्वितर्क सविचार और निर्विचार–ये चारों ग्राह्यविषयक समापत्तियां हैं तथापि यहाँ स्थूलविषयक सवितर्क और निर्वितर्करूप ग्राह्यसमापत्ति को छोड़कर सूक्ष्मविषयक सविचार और निर्विचाररूप ग्राह्यसमापत्ति को ध्यान में रखकर प्रश्न किया गया है)।

**समाधान**–ग्राह्यसमापत्ति की सूक्ष्मविषयता भूतसूक्ष्म में ही परिसमाप्त नहीं होती है, अपितु इसके आगे भी है। तदर्थ सूत्र है–'**सूक्ष्मेति**।' पार्थिव परमाणु की सम्बन्धिनी (उपादानकारणभूता) जो गन्धतन्मात्रता है, वही (सविचार और निर्विचार) समापत्ति का सूक्ष्म विषय है। इसी भाँति जलीयादि परमाणुओं के उपादान कारणभूत उत्तरोत्तर रसतन्मात्रादियों में सूक्ष्मविषयता को समझ लेना चाहिये। (भाष्य में प्रयुक्त) '**लिङ्गमात्र**' शब्द का अर्थ है–महत्तत्त्व। महत्तत्त्व (बुद्धि) को '**लिङ्गमात्र**' कहने का कारण यह है कि यह महत् 'प्रधान' में लय को प्राप्त होता है। '**अलिङ्ग**' शब्द का अर्थ है–प्रधान। प्रधान अर्थात् मूल प्रकृति को '**अलिङ्ग**' कहने का कारण यह है कि यह '**प्रधान**' किसी अन्य तत्त्व में (महदादि की भाँति) लय को प्राप्त नहीं होता है। भाष्यकार सूक्ष्मविषयता को '**अलिङ्ग**' तत्त्व में पर्यवसित करते हुए कहते हैं–'**न चाऽलिङ्गात्परमिति**।' अर्थात् प्रकृति (अलिङ्ग) से अधिक कोई सूक्ष्म तत्त्व नहीं है।

**शङ्का**–इस पर प्रश्न किया जा रहा है–'**नन्विति**।' केवल '**अलिङ्ग**' ही नहीं, अपितु '**पुरुष**' भी तो सूक्ष्म है?

**समाधान**–भाष्यकार खण्डन करते हैं–'**सत्यमिति**।' आपकी यह शंका किसी सीमा तक उचित है, किन्तु उपादानकारण की दृष्टि से (गन्धतन्मात्र से प्रारम्भ हुई तथाकथित) सूक्ष्मता '**अलिङ्ग**' पर्यन्त ही है। ऐसी सूक्ष्मता किसी अन्य (पुरुष) तत्त्व में नहीं है।

**शङ्का**–महत् तथा अहंकारादि की उत्पत्ति पुरुष के भोगापवर्गरूप निमित्त के कारण होती है। अतः पुरुष भी प्रकृतिवत् महत् और अहंकार आदि की उत्पत्ति का कारण है। अतः कारणलक्षणक यह सूक्ष्मता प्रकृतिपर्यन्त कैसे कही जा रही है?–इस आशय से पूर्वपक्षी पूछता है–'**किं त्विति**।'

**समाधान**—भाष्यकार उत्तर देते हैं–'**लिङ्गस्येति**।' यह सत्य है कि पुरुष महदादि का कारण है, किन्तु वह उपादानकारण नहीं है। जिस प्रकार प्रधान का महदादिभाव से परिणाम होता है, वैसे पुरुष का नहीं। भाव यह है कि अपरिणामी पुरुष जगत् (महदादि) का निमित्तकारण है, जब कि परिणामशीला प्रकृति जगत् का उपादानकारण है। सूक्ष्म होते हुए भी प्रधान और पुरुष के स्वरूप में यही मौलिक अन्तर है। प्रस्तुत सूत्र में ग्राह्यसमापत्ति के 'सूक्ष्म' विषय की परिसमाप्ति तत्तत् कार्य की दृष्टि से उसके उत्तरोत्तर उपादानकारण की सूक्ष्मता पर अवलम्बित है। इस सीमा में 'पुरुष' नहीं आता है।

अतः उपसंहार करते हुए भाष्यकार कहते हैं–'**अतः प्रधान एव सौक्ष्म्यं निरतिशयं व्याख्यातमिति**।' अतः प्रधान में ही निरतिशय सूक्ष्मता पर्यवसित होती है॥४५॥

**बालप्रिया**—

'**तेषामहङ्कारः**'–यहाँ भाष्य में '**तेषाम्**' पद से पञ्चतन्मात्राओं को लिया गया है। अर्थात् पञ्चतन्मात्राओं का कारण जो अहंकार है वह, पञ्चतन्मात्राओं की अपेक्षा समापत्ति का सूक्ष्म विषय है। अथवा '**तेषाम्**' इस षष्ठ्यन्त पद को पञ्चम्यन्त अर्थ में लेते हुए भी उक्त वाक्य की योजना इस प्रकार की जा सकती है–उन पञ्चतन्मात्राओं से अहंकार सूक्ष्म विषय है।

'**नन्वस्ति पुरुषः सूक्ष्म इति**'–पूर्वपक्षी की इस शंका का मूलाधार वह श्रुतिवाक्य है, जिसके द्वारा पुरुष में निरतिशय सौक्ष्म्य विवक्षित है। श्रुति है–'**अव्यक्तात्पुरुषः परः**'। अतः कैसे सौक्ष्म्यकाष्ठा को प्रधानपर्यन्त निर्दिष्ट किया जा रहा है?' '**सत्यम्**' पद के द्वारा पूर्वपक्षी के तर्क को स्वीकृति प्रदान करके भी भाष्यकार सौक्ष्म्यमापदण्ड के अभिप्रेत प्रसङ्ग को स्पष्ट करते हैं। यहाँ '**यथा**' शब्द यादृशार्थक है। परिणामी उपादानकारणता की दृष्टि से महत्तत्त्व की अपेक्षा प्रधान में जिस प्रकार की सूक्ष्मता है, वैसी सूक्ष्मता प्रधान की अपेक्षा पुरुष में नहीं है। क्योंकि पुरुष अपरिणामी है। निष्कर्षतः प्रधान में ही परिणामित्वसमानाधिकरणभूता सूक्ष्मता की विश्रान्ति है।

'**हेतुस्तु भवतीति**'–यहाँ '**इति**' शब्द 'हेतु' अर्थ में प्रयुक्त हुआ है। वाक्यार्थ इस प्रकार है–क्योंकि पुरुष लिङ्गादि का निमित्तकारण ही है, उपादानकारण नहीं। अतः उपादानकारण की दृष्टि से विवक्षित सौक्ष्म्य प्रधान में ही निरतिशयत्व को प्राप्त होता है। जहाँ अन्वयिकारणत्व (उपादानकारणत्व) सौक्ष्म्यप्रतिपादन के लिये विवक्षित नहीं होगा, वहाँ पुरुष को भी सूक्ष्म कहा जा सकेगा॥४५॥

### योगवार्त्तिकम्

सूक्ष्मविषयेत्युक्तम्। तत्र सूक्ष्मो विषयः किंपर्यन्त इत्याकाङ्क्षायामा[1]ह–सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम्। सूक्ष्मश्चासौ विषयश्चेति सूक्ष्मविषयः। अलिङ्गं प्रकृतिस्तत्पर्यन्तैव सूक्ष्मविषयतेत्यर्थः। तत्र स्थूलमारभ्य प्रकृति[2]पर्यन्तस्य सूक्ष्मतायां क्रममाह–पार्थिवस्येति। स्थूलकाष्ठाः[3] पञ्चविधा अणवः, तत्र पार्थिवाण्वपेक्षया गन्धतन्मात्रं समापत्तेः सूक्ष्मो विषयः। यद्यपि पार्थिवाणुर्जलविशिष्टगन्धतन्मात्रारब्धस्तथाऽपि गन्धतन्मात्रस्य प्राधान्यात् तदेव पार्थिवाणोः सूक्ष्मत्वमुक्तम्। एवमाप्यादीनां त्रयाणां पूर्वपूर्वभूतविशिष्टरसादितन्मात्रकार्यत्वेऽप्याकाशाणोश्चाहङ्कारविशिष्टशब्दतन्मात्रकार्यत्वेऽपि च[4] प्राधान्यादेकैकतन्मात्रमेव सूक्ष्ममित्युक्तमिति वेदितव्यम्। तेषामहङ्कार इति। तेषां पञ्चतन्मात्राणामहङ्कारः सूक्ष्मः, कारणत्वात्। अत्र च तन्मात्रैरिन्द्रियाण्युपलक्षणीयानि। अस्यापीति। अहङ्कारस्यापीत्यर्थः। लिङ्गमात्रं महत्तत्त्वम्, तद्धि स्वकारणस्य प्रकृतेरनुमापकमात्रमंकुरवत्, प्रकृतिगतविशेषाणामहंकारादिष्वेव प्रकटीभावात्, यथा[5]न्यत्र काण्डादिभिर्बीजगतविशेषाभिव्यक्तिर्नांकुरमात्रेणेति। अलिङ्गं प्रधानम्, अकार्यत्वेन कस्याप्यननुमापकत्वादिति। अलिङ्गपर्यवसानत्वं व्याचष्टे–न चालिङ्गादिति। चोदयति–नन्विति। ननु पुरुषः प्रकृत्यपेक्षयाऽपि सूक्ष्मोऽस्ति निर्धर्मकत्वादिति पूर्वपक्षं परिहरति–सत्यमिति। यथोपादानतया लिङ्गा[6]पेक्षितं सौक्ष्म्यं प्रधानस्यास्ति नैवं पुरुषस्य, तस्यापरिणामित्वात्। उपादानतया च सूक्ष्मत्वमत्र [7]विवक्षितमित्याशयः। ननु यदि पुरुषः कारणं न भवति तर्हि यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद् ब्रह्म,

तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी॥

इत्यादिश्रुतिस्मृतिशतविरोध इत्याशङ्कां परिहरति–किं तु लिङ्गस्येति। हेतुस्तु भवति, किन्तु लिङ्गस्यान्वयिकारणमुपादानकारणं पुरुषो न भवतीति व्युत्क्रमेणान्वयः। तत्र परमात्मनोऽधिष्ठातृत्वेन निमित्तकारणत्वम्,

मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्॥

इति गीता[8]वचनात्;

---

1. ख – सूत्रेण ( आह पश्चात् ) उपलभ्यते, क ग घ च छ – सूत्रेण नोपलभ्यते।
2. क घ – पर्यन्तस्थूलसूक्ष्मतायां, ख ग च छ – पर्यन्तस्य सूक्ष्मतायाम्।
3. क ग घ च छ – स्थूलकाष्ठाः, ख – स्थूलापकर्षकाष्ठाः।
4. क ख – च उपलभ्यते, ग घ च छ – च नोपलभ्यते।
5. क च छ – अन्यत्र, ख ग घ – यत्र।
6. क ग घ च छ – अपेक्षितं, ख – आपेक्षिकं।
7. ख – न तु गुणाभासोऽत्र सूक्ष्मत्वं ( विवक्षितं पश्चात् ) उपलभ्यते, क ग घ च छ – न... सूक्ष्मत्वं नोपलभ्यते।
8. क ख ग – आदि० ( गीता पश्चात् ) उपलभ्यते, घ च छ – आदि० नोपलभ्यते।

प्रधानपुंसोरजयोर्यतः क्षोभः प्रवर्त्तते।
नित्ययोर्व्यापिनोश्चैव जगदादौ महात्मनोः॥
तत्क्षोभकत्वात् ब्रह्माण्डसृष्टौ हेतुर्निरञ्जनः।
अहेतुरि[1]ति सर्वात्मा ज्ञायते परमेश्वरः॥

इत्यादि सकलस्मृतिषु तथा निर्णयाच्च। यत्तु—ईश्वरस्याधिष्ठानत्वरूपमुपादानत्वं यतो वा इमानि भूतानि जायन्ते इत्याद्युक्तश्रुतिस्मृत्योर्गीयत आकाशस्य वायूपादानत्ववत् तदप्यत्र दर्शने निमित्तकारणतामध्य एव प्रवेश्यते पुरुषाणां विकारित्वभ्रम[2]निरासायेति। पुरुषार्थं प्रकृतेः प्रवृत्त्यभ्युपगमेन च जीवपुरुषाणामपि महदाद्यखिलसृष्टिहेतुत्वं संयोगमात्रेण, नोपादानत्वेन। तथा चोक्तम्—

बुद्ध्यादयो विशेषान्ता अव्यक्तादीश्वरेच्छया।
पुरुषा[3]धिष्ठितादेव जज्ञिरे मुनिपुङ्गवाः!॥
सत्त्वं रजस्तम इति प्रकृतेरभवन् गुणाः।
मया प्रक्षोभ्यमाणायाः पुरुषा[4]नुमतेन च॥

इत्यादिस्मृतिभिः। जीवानामधिष्ठानसंयोगमात्रम्। अनुमतिस्तु पूर्व[5]कल्पीयकामकर्मादिरूपेति दिक्॥४५॥

विचारानुगत समापत्ति को सूक्ष्मविषयिणी बताया गया है। यह '**सूक्ष्म**' विषय कहाँ तक है? ऐसी शंका होने पर सूत्रकार कहते हैं—'**सूक्ष्मेति**।' '**सूक्ष्मश्चासौ विषयश्चेति सूक्ष्मविषयः**' अर्थात् सूक्ष्म होता हुआ जो विषय है, उसे '**सूक्ष्मविषय**' कहते हैं। '**अलिङ्ग**' शब्द का अर्थ '**प्रकृति**' है। इस प्रकार की सूक्ष्मविषयता 'अलिङ्ग' अर्थात् प्रकृतिपर्यन्त ही है। अब भाष्यकार स्थूल से लेकर प्रकृतिपर्यन्त सूक्ष्म पदार्थों के क्रम को बताते हैं—'**पार्थिवस्येति**।' 'स्थूलकाष्ठा' परिमाण वाले पांच प्रकार के अणु हैं। इनमें से पार्थिव अणु की अपेक्षा गन्धतन्मात्र, समापत्ति का सूक्ष्म विषय है। यद्यपि पार्थिव अणु जलविशिष्ट गन्धतन्मात्र से निर्मित है, तथापि पार्थिव अणु में गन्धतन्मात्र की प्रधानता होने से उस गन्धतन्मात्र में ही पार्थिव अणु की अपेक्षा सूक्ष्मत्व विवक्षित है। इसी भाँति जलीय, तैजस और वायवीय तीनों अणुओं में पूर्व-पूर्व भूतविशिष्ट रसादितन्मात्र (रसतन्मात्र, रूपतन्मात्र, स्पर्शतन्मात्र) रूप कारण के प्रति कार्यता

---

1. क ख ग घ – **अपि**, च छ – **इति**।
2. क ख घ च छ – **भ्रम०**, ग – **धर्म०**।
3. क ग घ च छ – **अधिष्ठितादेव**, ख – **अधिष्ठितादेवाः**।
4. क ख घ च छ – **अनुमतेन**, ग – **अनुमते**।
5. क ग घ च छ – **कल्पीय०**, ख – **कल्पाय**।

तथा आकाश-अणु में अहंकारविशिष्ट शब्दतन्मात्ररूप कारण के प्रति कार्यता होने पर भी प्रधानता के कारण एक-एक तन्मात्रा में ही कारणनिबन्धक सूक्ष्मत्व बताना अभिप्रेत है, ऐसा समझना चाहिये। अर्थात् जलीय-अणु की अपेक्षा रसतन्मात्र, तैजस अणु की अपेक्षा रूपतन्मात्र, वायवीय अणु की अपेक्षा स्पर्शतन्मात्र तथा आकाशीय अणु की अपेक्षा शब्दतन्मात्र को 'सूक्ष्म' कहा गया है। **'तेषामहङ्कार इति।'** इन पञ्चतन्मात्राओं की अपेक्षा **'अहंकार'** सूक्ष्म है, क्योंकि अहंकार तन्मात्राओं का कारण है। यहाँ **'तन्मात्राओं'** से इन्द्रियाँ भी उपलक्षित हैं। अर्थात् पञ्चतन्मात्र तथा इन्द्रियों की अपेक्षा अहंकार सूक्ष्म है। **'अस्यापीति।'** अहंकार की अपेक्षा **'लिङ्गमात्र'** अर्थात् महत्तत्त्व सूक्ष्म है। योगवार्त्तिककार महत्तत्त्व को **'लिङ्गमात्र'** कहे जाने का कारण बताते हैं–जिस प्रकार अंकुर बीज की सत्ता का अनुमानमात्र कराता है, उसी प्रकार महत्तत्त्व अपनी कारणभूता प्रकृति का अनुमापक मात्र होता है। इसलिये महत् को **'लिङ्गमात्र'** कहते हैं, क्योंकि मूलकारणरूप प्रकृति में निहित वैशिष्ट्य का प्रकटीकरण तो अहंकारादि कार्यों में ही परिलक्षित होता है। जिस प्रकार शाखा-प्रशाखाओं (काण्डादि) के द्वारा बीजनिष्ठ वैशिष्ट्य परिलक्षित होता है, केवल अंकुरमात्र से नहीं। सरलार्थ यह है कि महद्रूप अंकुर से अनुमित बीजरूप प्रकृति अहंकारादिरूप काण्डादिकों में अपने मौलिक स्वरूप को स्पष्टतः प्रस्फुटित करती है, ऐसा बतलाना योगवार्त्तिककार को अभिप्रेत है। **'अलिङ्ग'** शब्द का अर्थ प्रधानतत्त्व है। यह **'प्रधान'** किसी अन्य तत्त्व का कार्य न होने से अपने कारण का भी अनुमान नहीं कराता है, अतः प्रकृति को **'अलिङ्ग'**=अननुमापक कहते हैं। भाष्यकार कारणगत सूक्ष्मता का पर्यवसान 'अलिङ्ग' प्रकृति में बताते हैं–**'न चालिङ्गादिति।'** अर्थात् अलिङ्ग से अधिक कोई दूसरा सूक्ष्म तत्त्व नहीं है।

**शङ्का**–पूर्वपक्षी प्रश्न करता है–**'नन्विति।'** निर्धर्मक होने से प्रकृति की अपेक्षा पुरुष सूक्ष्म है। अतः सौक्ष्म्यपर्यवसान प्रकृति में ही क्यों माना गया है?

**समाधान**–पूर्वपक्ष का खण्डन करते हुए भाष्यकार कहते हैं–**'सत्यमिति।'** उपादान-कारण होने से 'लिङ्ग' रूप बुद्धि की अपेक्षा 'अलिङ्ग' प्रकृति में जिस प्रकार की सूक्ष्मता है, वैसी (उपादानकारणक) सूक्ष्मता पुरुष तत्त्व में नहीं हो सकती है, क्योंकि पुरुष अपरिणामी है। किञ्च प्रकृत में उपादानकारण की दृष्टि से पदार्थों में सौक्ष्म्य का निर्धारण किया जा रहा है।

**शङ्का**–यदि पुरुष को कारण न माना जाय तो **'यतो वा इमानि...'** (तै. उप. ३/१), **'तमेव चाद्यं...'** (गीता १५/४) इत्यादि सैकड़ों श्रुति-स्मृति-वाक्यों से विरोध होगा?

श्रुतिवाक्य का अर्थ है-'जिससे ये भूत उत्पन्न होते हैं, स्थिति वाले होते हैं और उसी में लय को प्राप्त होते हैं, उसे ब्रह्म कहते हैं।' स्मृतिवाक्य का अर्थ है-'जिससे संसार की अनादिकाल से प्रवृत्ति हुई है और जो इस संसारवृक्ष का बीज है, उस आदि पुरुष की शरण में मैं प्राप्त होता हूँ।'

**समाधान**-भाष्यकार शंका का परिहार करते हुए कहते हैं-'**किं तु लिङ्गस्येति**।' 'पुरुष' कारण तो है, किन्तु वह लिङ्गरूप बुद्धि का '**अन्वयिकारण**' अर्थात् उपादानकारण नहीं है-इस प्रकार क्रम-भंग करके वैयासिक वाक्य का अन्वय करना चाहिये। ईश्वर में तो (जगत् का अधिष्ठाता होने से) अधिष्ठातृत्वरूप निमित्तकारणत्व है, क्योंकि गीता से इस बात की पुष्टि होती है-'**मया...सचराचरम्**' (९/१०) अर्थात् 'हे कौन्तेय! साक्षिरूप मुक्त से उपहित (युक्त) होकर प्रकृति ही स्थावरजङ्गमात्मक सम्पूर्ण जगत् की उत्पत्ति, स्थिति और लय करती है।' समस्त स्मृतियों में भी यही तथ्य निर्णीत हुआ है-'**प्रधानपुंसो...परमेश्वरः**' अर्थात् 'सृष्टि के आदि में ही नित्य, व्यापक, महात्मरूप और अजरूप प्रधान-पुरुष में संक्षोभ होता है। इस संक्षोभ से ब्रह्माण्ड की संरचना में निरञ्जन पुरुष को 'हेतु' कहा गया है और सबका आत्मभूत परमेश्वर 'अहेतु' रूप से जाना जाता है।' और जो '**यतो वा इमानि भूतानि जायन्ते**' इत्यादि श्रुति-स्मृति-वाक्यों से ईश्वर का अधिष्ठातृत्वरूप उपादानत्व वर्णित है, वह वैसा ही है जैसे आकाश को वायु का उपादानकारण कहा जाना योगमत में निमित्तकारणतापक्ष में ही न्यस्त होता है। पुरुष के विकारी (परिणामी) होने के भ्रम को दूर करने के लिये उसे निमित्तकारण कहा गया है। पुरुष के भोग और मोक्षरूप पुरुषार्थ के लिये प्रकृति की प्रवृत्ति को स्वीकार करने से यह सिद्ध हो जाता है कि जीव-पुरुषों का भी महदादि अखिल सृष्टि के प्रति हेतुत्व '**संयोगमात्र**' से ही है, न कि उपादानत्वरूप से। जैसा कि स्मृतिवाक्यों में कहा गया है-'**बुद्ध्यादयो...पुरुषानुमतेन च**' (सौर पु. २१/६-७) अर्थात् 'ईश्वर की इच्छा के अनुसार अव्यक्त प्रकृति के द्वारा बुद्धि से लेकर 'विशेष' अर्थात् महाभूतपर्यन्त पदार्थ (अभिव्यक्त होते) हैं। हे मुनिश्रेष्ठ! इन्हें पुरुष के अधिष्ठानरूप से ही जानना चाहिये। सत्त्व, रजस् और तमस्-ये प्रकृति के गुण (कहे जाते) हैं, जो पुरुषानुमत (पुरुषसंयोग) के कारण मुझ ईश्वर के द्वारा संक्षोभ के स्वभाव वाले हैं।' यहाँ पर जीवों का अधिष्ठानत्व संयोगमात्र से ही कहा गया है। तथा उद्धरण में आये '**पुरुषानुमत**' से पुरुष के पूर्वजन्म से सम्बन्धित काम, कर्मादि का ग्रहण होता है॥४५॥

अगला सूत्र है-

## योगसूत्रम्

## [1]ता एव [2]सबीजः समाधिः॥४६॥

(पूर्वोक्त) वे (सवितर्क, निर्वितर्क, सविचार तथा निर्विचार) समापत्तियाँ 'सबीज' समाधि ही हैं॥४६॥

## व्यासभाष्यम्

**ताश्चतस्रः समापत्तयो बहिर्वस्तुबीजा इति समाधिरपि सबीजः। तत्र स्थूलेऽर्थे सवितर्को निर्वितर्कः, सूक्ष्मेऽर्थे सविचारो निर्विचार इति स[3] चतुर्धोपसंख्यातः समाधिरिति॥४६॥**

वे चारों समापत्तियाँ बाह्य विषयरूप आलम्बन वाली होती हैं, अतः यह (सम्प्रज्ञात) समाधि भी 'सबीज' (सालम्बन) कही जाती है। इनमें से स्थूल अर्थ को आलम्बन बनाने वाली समापत्ति 'सवितर्क' और 'निर्वितर्क' कही जाती है तथा सूक्ष्म 'अर्थ' को आलम्बन बनाने वाली समापत्ति 'सविचार' तथा 'निर्विचार' कही जाती है। इस प्रकार सम्प्रज्ञात समाधि के चार प्रकार परिगणित हुए हैं॥४६॥

## तत्त्ववैशारदी

**चतसृणामपि समापत्तीनां ग्राह्यविषयाणां संप्रज्ञाततत्वमाह–ता एव सबीजः समाधि। एवकारो भिन्नक्रमः सबीज इत्यस्यानन्तरं द्रष्टव्यः। ततश्चतस्रः समापत्तयो ग्राह्यविषयाः सबीजतया नियम्यन्ते। सबीजता त्वनियता ग्रहीतृग्रहणगोचरायामपि समापत्तौ विकल्पाविकल्पभेदेनानिषिद्धा व्यवतिष्ठते। तेन ग्राह्ये चतस्रः समापत्तयो ग्रहीतृग्रहणयोश्च चतस्र इत्यष्टौ ते[4] भवन्तीति। निगदव्याख्यातं भाष्यम्॥४६॥**

सूत्रकार ग्राह्यविषयक चार समापत्तियों में भी सम्प्रज्ञाततत्व को बताते हैं। अर्थात् पूर्वकथित चार समापत्तियाँ भी सम्प्रज्ञात समाधि के भेद हैं, ऐसा सूत्रकार प्रतिपादित करते हैं–**'ता एवेति।'** सूत्र में प्रयुक्त **'एव'** पद का अन्वय **'ताः'** पद के पश्चात् न करके **'सबीजः'** पद के पश्चात् (**सबीज एव**) किया जाता है। इस प्रकार एवकार भिन्नक्रम वाला है। इससे ग्राह्यविषयक चार समापत्तियाँ **'सबीज'** रूप से ही

---

1. **एताः**–इति पाठान्तरम्।
2. **स सबीजः**–इति पाठान्तरम्।
3. क ख ग च छ ज झ त थ द ध न भ य – **सः** उपलभ्यते, घ प फ ब म र – **सः** नोपलभ्यते।
4. क ख ग घ च छ ज झ त न – **सिद्धाः**, थ द ध – **ते**।

नियमित की जाती हैं। किन्तु अनियत सबीजता तो **'ग्रहीतृ'** और **"ग्रहण'** विषयक समापत्तियों में भी **'विकल्प'** अर्थात् अभेदाध्यास और **'अविकल्प'** अर्थात् अभेदानध्यास के भेद से अनिषिद्ध है। इससे यह सिद्ध होता है कि ग्राह्यविषयक चार समापत्तियों तथा ग्रहीतृ-ग्रहणविषयक चार समापत्तियों को मिलाकर कुल आठ समापत्तियाँ हो जाती हैं। यह बात भाष्य में स्पष्ट रूप से कही गई है॥४६॥

**बालप्रिया–**

**'एवकारो भिन्नक्रमः'–**

**शङ्का–**सूत्र में **'ता एव'** इस कथन से पूर्वोक्त ग्राह्यविषयक चार समापत्तियों का ही ज्ञान (संग्रह) होता है। अतः ये चार (सवितर्क, निर्वितर्क, सविचार तथा निर्विचार) समापत्तियाँ ही 'सबीज सम्प्रज्ञात' कहला सकेंगी। ग्रहीतृ और ग्रहणविषयक समापत्तियों को 'सबीज' नहीं माना जा सकेगा। किन्तु इससे सूत्र-गठन की न्यूनता समझी जायेगी, क्योंकि स्वयं सूत्रकार को ग्रहीतृ और ग्रहणसमापत्ति का **'सबीजत्व'** मान्य है।

**समाधान–**आपाततः प्रतीत उक्त सूत्रगत न्यूनता का परिहार वाचस्पति मिश्र ने **'एवकारो भिन्नक्रमः'** अन्वयपरक शब्दावली द्वारा सहज कर दिया है तथा सूत्र में 'एव' पद के प्रयोग का प्रयोजन इस प्रकार उद्घाटित किया है कि सूत्रकार को इन चार समापत्तियों का ही 'सबीजत्व' बतलाना अभिप्रेत नहीं है, अपितु **'सबीजा एवेमे'** द्वारा इनके 'निर्बीजत्व' का निषेध करना है। इससे ग्रहीतृ और ग्रहण समापत्तियों का 'सबीजत्व' खण्डित नहीं होता है, अपितु उनका 'सबीजत्व' अक्षुण्ण रहता है।

**'...सबीजतया नियम्यन्ते,...अनिषिद्धा व्यवतिष्ठते'**–इस कथन का अभिप्राय यह है कि जिस प्रकार **'व्रीहीनवहन्ति, चतुरो मुष्टीन्निर्वपति'** यहाँ पर प्रत्येक व्रीहि में अवघात का योग नियमित होता है। अर्थात् व्रीहि से तुषविमोक अवघातपूर्वक करना चाहिये, नखविदलन आदि से नहीं–ऐसा नियम किया जाता है। किन्तु इसका अर्थ यह नहीं है कि याग के साधनीभूत अन्य द्रव्यों में अवघातक्रिया निषिद्ध है। उसी प्रकार यहाँ ग्राह्यविषयक समापत्तियों में सबीजता है, ऐसा नियम करने पर भी अन्य ग्रहीतृसमापत्ति और ग्रहणसमापत्ति में सबीजता का निषेध नहीं किया गया है।

**'ताश्चतस्रः समापत्तयः'**–भाष्य में प्रयुक्त **'चतस्रः'** पद से भी उक्त सिद्धान्त बाधित नहीं होता है। अर्थात् भाष्यकार को सवितर्कादि चार का ही सबीजत्व मान्य है, ऐसा नहीं समझना चाहिये। **वितर्कविचारानन्दास्मितारूपानुगमात् संप्रज्ञातः** १/१७, **क्षीणवृत्तेरभिजातस्येव मणेः...**१/४१ तथा **सूक्ष्मविषयत्वं चाऽलिङ्गपर्यवसानम्** १/४५ इन तीनों सूत्रों पर समन्वयात्मक पुनरीक्षण करने से उक्त सिद्धान्त ही समर्थित होता है। ग्रहीतृ और ग्रहणसमापत्ति का अन्तर्भाव सूक्ष्मविषयक ग्राह्य समापत्ति में होता

है, जो इस प्रकार है–इन्द्रियविषयक ध्येयाकारता को ग्रहणसमापत्ति तथा अस्मिताविषयक ध्येयाकारता को ग्रहीतृसमापत्ति कहते हैं। 'अस्मिता' और 'इन्द्रियों' का सूक्ष्मविषयत्व स्पष्ट ही है। अतएव सूक्ष्मग्राह्यविषयक सविचार और निर्विचार समापत्ति को बतलाने के पश्चात् सूत्रकार ने सूक्ष्मत्व को अलिङ्गपर्यन्त इंगित किया है। इसके अन्तर्गत इन्द्रिय तथा अहंकार भी आ जाते हैं। यद्यपि भाष्यकार ने इन्द्रियों का सूक्ष्मत्व नहीं बतलाया है तथापि **'तन्मात्र'** पद से इन्द्रियाँ भी उपलक्षित होती हैं, क्योंकि इन्द्रियाँ और तन्मात्र दोनों ही अहंकार के कार्य हैं। इस प्रकार ग्रहीतृ और ग्रहणसमापत्तियाँ सूक्ष्मग्राह्यविषयक समापत्ति में अन्तर्भुक् हो जाने से सवितर्कादि चार का ही 'सबीजत्व-विधान' भी अनुपपन्न नहीं ठहरता है।

**'अष्टौ ते भवन्तीति'**–तत्त्ववैशारदीय कथन की संयोजना इस प्रकार है–सविचार और निर्विचार के भेद से सम्प्रज्ञात दो प्रकार है। **'क्षीणवृत्तेः'** सूत्र द्वारा अवान्तरभेद को लेते हुए सम्प्रज्ञात तीन प्रकार का बतलाया गया है। उसमें भी अवान्तर-भेद को लेते हुए **'वितर्कविचार'** सूत्र द्वारा सम्प्रज्ञात का चातुर्विध्य कथित है। उसमें भी 'विकल्प' और 'अविकल्प' की दृष्टि से तथाकथित चतुर्विधता 'अष्टविधत्व' में पर्यवसित होती है। इस प्रकार वाचस्पतिमिश्र ने सम्प्रज्ञात के आठ भेद बताये हैं॥४६॥

## योगवार्त्तिकम्

**तदेवं ग्राह्यग्रहणसमापत्त्योः स्थूलसूक्ष्मविषयभेदेन विशिष्टाविशिष्टरूपतश्[1]चतुर्विधविभाग उक्तः। ग्रहीतृसमापत्तौ च यः [2]सविकल्परूपो विशेषः स एतास्वेव चतसृष्वन्तर्भूतः, चेतनोपरागेणैवाचेतनेषु योगस्य व्यवस्थापितत्वात्। अतो ग्रहीतृसमापत्तौ सविकल्पाविकल्पादिविभागो नोक्तः। वितर्केत्यादिसूत्रेण पूर्वं संप्रज्ञातस्यावान्तरविभाग एव कृतः। इदानीं यथोक्तसमापत्त्याख्यकार्यमुखेन [3]सबीजपरिभाषापूर्वकं संप्रज्ञातस्य सामान्यलक्षणमनेनैव प्रसङ्गेनाह–ता एव सबीजः समाधिः।**

इस प्रकार स्थूल तथा सूक्ष्मविषय के भेद से ग्राह्य और ग्रहण समापत्तियों का विशिष्ट तथा अविशिष्ट (उपरक्त तथा अनुपरक्त) रूप से चार प्रकार का प्रभेद बतलाया गया। ग्रहीतृसमापत्ति में जो सविकल्परूप विशेष है, वह समापत्ति के पूर्वनिर्दिष्ट चार प्रभेदों में ही अन्तर्भुक् हो जाता है, क्योंकि चेतन के उपराग अर्थात् सम्बन्ध से ही अचेतन पदार्थों के विषय में योग (समाधि) की व्यवस्था हो

1. क ख ग – **चतुर्धा**, घ च छ – **चतुर्विध०**।
2. क ग घ च छ – **सविकल्परूपः** ख – **विशिष्टरूपः**।
3. ख ग घ च छ – **सबीजपरिभाषापूर्वकं संप्रज्ञातस्य सामान्यलक्षणमनेनैव प्रसङ्गेनाह** उपलभ्यते, क – **सबीज...आह** नोपलभ्यते।

सकती है। अतः ग्रहीतृसमापत्ति का सविकल्प और निर्विकल्परूप विभाग (प्रभेद) नहीं कहा गया है। पीछे 'वितर्कविचार...' १/१७ सूत्र द्वारा सम्प्रज्ञात का अवान्तर-विभाग ही कथित है। सम्प्रति, चित्त की पूर्वनिर्दिष्ट समापत्त्याख्य अवस्था के द्वारा 'सबीज' परिभाषापुरस्सर (सबीज को लक्षित करते हुए) सम्प्रज्ञात का सामान्य-लक्षण इसी प्रसङ्ग में किया जा रहा है–'ता एवेति।'

### योगवार्त्तिकम्

**ता एव ग्रहीतृग्रहणग्राह्येषु समापत्तय एव सबीजः समाधिः संप्रज्ञातयोग इत्यर्थः। समापत्तिरूपसाक्षात्कारहेतुत्वाद्योगस्य समापत्तित्वमुक्तम्, योगे स्वतोऽवान्तरविशेषाभावादिति। ननु ग्रहीतृग्रहणग्राह्य[1]समापत्तिभिर्वितर्कविचारास्मिताऽनुगतास्त्रयः संप्रज्ञाता एव [2]संगृह्यन्ते न पुनरानन्दानुगत इति कथं ता एवेत्यवधारणमिति चेत्? न, आनन्दस्य बुद्धिधर्मत्वेन ग्राह्यमध्ये प्रवेशात्। ननु दुःखबीजसंस्कारहेतुतया समापत्तय एव सबीजाः न तु वृत्तिनिरोधात्मको योग इति कथमुच्यते ता एव सबीजयोग इति? [3]तत्राह भाष्यकारः– ताश्चतस्र इति। [4]बहिर्वस्तून्यनात्मधर्माः संस्कारधर्मादयो दुःखबीजानि जायन्त आभ्य इति बहिर्वस्तुबीजाः, संप्रज्ञातनिष्ठाया अपि संस्कारहेतुत्वाद् धर्ममेघत्वाच्च। तथा च वितर्कादि-सूत्रोक्तरीत्या चतस्रः, प्रकृते तु त्रिधा विभक्तास्ता ग्रहीत्रादिविषयिकाः समापत्तयो बहिर्वस्तु-बीजा इत्यतस्ताभिः सम्बन्धात्समाधे संप्रज्ञाताख्यो वृत्तिनिरोधोऽपि सबीज उच्यत इत्यर्थः। ननु स्थूलसूक्ष्मसमापत्तेरेव चतुर्विधत्वादानन्दास्मितासमापत्तिभ्यां सह षट् समापत्तयो भवन्ति, तत्कथमुच्यते चतस्र इत्याशङ्कामपाकरोति–तत्र [5]स्थूलेऽर्थ इति। तत्र चतसृषु समापत्तिषु मध्ये। स्थूलेऽर्थ एक एव समाधिरवान्तरभेदेनैव सविचारनिर्विचाररूपतो द्विधा; तथा सूक्ष्मेऽर्थेऽप्येक एव समाधिरवान्तरभेदेनैव सविचारनिर्विचाररूपतो द्विधा प्रोक्त इत्यतो [6]वितर्कानुगतादिरूपैः [7]पूर्वैः स संप्रज्ञातयोगश्चतुर्धोपसंख्यातः परिगणित इत्यर्थः।**

'**ता एव**'=ग्रहीतृ-ग्रहण-ग्राह्य में होने वाली समापत्तियाँ ही अर्थात् ग्रहीत्रादि विषयक समापत्तियाँ ही '**सबीज समाधि**' अर्थात् सम्प्रज्ञात योग कही जाती हैं।

---

1. क घ – समापत्ति०, ख ग च छ – समापत्तिभिः।
2. क ख घ च छ – संगृह्यन्ते, ग – गृह्यते।
3. क ग घ च छ – तत्राह उपलभ्यते, ख – तत्राह नोपलभ्यते॥
4. क ख घ च छ – बहिर्वस्तून्यनात्मधर्माः संस्कारधर्मादयो दुःखबीजानि जायन्त आभ्य इति उपलभ्यते, ग – बहि....आभ्य इति नोपलभ्यते।
5. क घ छ – स्थूलेऽर्थे, ख च – स्थूले, ग – स्थूलार्थे।
6. क ख घ च छ – वितर्क०, ग – निर्वितर्क०।
7. क च छ – पूर्वैः सः, ख – पूर्व०, ग घ – पूर्वम्।

निरुपद्रवभूतार्थस्वभावस्य विपर्ययैः।
न बाधोऽ[1]नादिमत्त्वेऽपि [2]बुद्धेस्तत्पक्षपाततः ॥ इति।

स्यादेतत्—समाधिप्रज्ञातोऽस्तु व्युत्थानजस्य संस्कारस्य निरोधः। समाधिजस्तु संस्कारातिशयः समाधिप्रज्ञाप्रसवहेतुरस्त्यविकल इति तदवस्थैव चित्तस्य साधिकारतेति चोदयति—कथमसाविति। परिहरति—न त इति। चित्तस्य हि कार्यद्वयं शब्दाद्युपभोगो विवेकख्यातिश्चेति। तत्र क्लेशकर्माशयसहितं शब्दाद्युपभोगे प्रवर्तते। प्रज्ञाप्रभवसंस्कारोन्मूलितनिखिलक्लेशकर्माशयस्य तु चेतसोऽवसितप्रायाधिकारभावस्य विवेकख्यातिमात्रम[3]वशिष्यते कार्यम्। तस्मात्समाधिसंस्काराश्चित्तस्य न भोगाधिकारहेतवः, प्रत्युत तत्परिपन्थिन इति। स्वकार्याद्योगलक्षणादवसादयन्ति असमर्थं कुर्वन्तीत्यर्थः। कस्मात्? ख्यातिपर्यवसानं हि चित्तचेष्टितमिति। तावद्धि भोगाय चित्तं चेष्टते न यावद्विवेकख्यातिमनुभवति। संजातविवेकख्यातिनस्तु क्लेशनिवृत्तौ न भोगाधिकार इत्यर्थः। [4]तदत्र भोगाधिकारप्रशान्तिः प्रयोजनं प्रज्ञासंस्काराणामित्युक्तम्॥५०॥

सूत्र में आये 'तत्' पद से 'निर्विचार-समापत्ति' का ग्रहण किया जाता है। (और) 'अन्य' पद से 'व्युत्थान' को बताया गया है। बुद्धि का यह स्वभाव है कि वह यथार्थ विषय को ग्रहण करने के लिये तत्पर रहती है। अर्थात् बुद्धि यथार्थ वस्तु को ही सर्वथा ग्रहण करना चाहती है। बुद्धि तभी तक इधर-उधर भटकती है, जब तक वह यथार्थ वस्तु को ग्रहण नहीं कर पाती है। और जब यह बुद्धि समाधिप्रज्ञारूप यथार्थ वस्तु को ग्रहण कर लेती है, तब उसी क्षण से (मिथ्या वस्तु की तरफ भटकना छोड़कर) सत्य (यथार्थ) वस्तु में स्थितिपद को प्राप्त (समाधिप्रज्ञाजन्य) संस्कारविशिष्ट बुद्धि व्युत्थान-संस्काररूप चक्र से भ्रमण करती हुई अनादि मिथ्यासंस्कारविशिष्ट बुद्धिक्रम को भी, निश्चित रूप से निरुद्ध करती है। अर्थात् अनादि व्युत्थानात्मक संस्कार को कार्य करने से रोकती है। इस विषय में वेदबाह्य अर्थात् बाह्यार्थवादी वैभाषिकों का कहना है—'निरुपद्रव....पक्षपाततः' अर्थात् 'समनन्तरप्रत्यय, सहकारिप्रत्यय, अधिपतिप्रत्यय तथा आलम्बनप्रत्ययरूप उपद्रव (विपर्यय) से रहित यथार्थ पदार्थ को ग्रहण करने वाली प्रमात्मक बुद्धि का अनादित्व होते हुए भी इन आलम्बन आदि विपर्यस्त ज्ञानों से बाध नहीं होता है। क्योंकि सत्य अर्थ का पक्षपात करना बुद्धि का स्वभाव होता है।'

---

1. क छ – अनादिसत्त्वे, ख ग घ च ज झ त थ द ध न – अनादिमत्त्वे।
2. क ख ग घ च छ झ त थ द ध न – बुद्धेः, ज – बुद्धिः।
3. क ख घ च छ ज झ त थ द ध न – अवशिष्यते, ग – अवशिष्टे।
4. क ख ग थ द ध – तदत्र भोगाधिकारप्रशान्तिः प्रयोजनं प्रज्ञासंस्काराणामित्युक्तम् १/५० सूत्रस्य टीका, घ च छ ज झ त न तदत्र.....युक्तम् १/५१ सूत्रस्य अवतरणिका।

**शङ्का**–यदि यह मान भी लिया जाय कि समाधिप्रज्ञा (जन्यसंस्कार) से विक्षेपजनित व्युत्थानसंस्कार निरुद्ध होता है। अर्थात् व्युत्थानात्मक संस्कार का पुनः प्रादुर्भाव नहीं होता है फिर भी समाधिप्रज्ञा (ऋतम्भराप्रज्ञा) से उत्पन्न संस्कारातिशय तो निश्चितरूप से समाधिप्रज्ञा की उत्पत्ति का हेतु होगा–इससे समाधिप्रज्ञाविशिष्ट चित्त की साधिकारता तो तदवस्थ बनी रही। (भाव यह है कि जन्म-मरण के चक्र में आबद्ध चित्त को 'साधिकार' कहते हैं। यह साधिकारता संस्कारविशिष्ट चित्त की होती है। समाधिप्रज्ञायुक्त चित्त को भी साधिकार कहना चाहिये, क्योंकि यह चित्त भी समाधिप्रज्ञाजन्यसंस्कार से युक्त रहता है। अतः व्युत्थानात्मक संस्कारविशिष्ट चित्त से समाधिप्रज्ञात्मक संस्कारविशिष्ट चित्त में कोई पार्थक्य नहीं है। साधिकारिता दोनों में तुल्य है)–इसी प्रश्न को ध्यान में रखते हुए पूर्वपक्षी पूछता है–'**कथमसाविति**।' समाधिप्रज्ञाजन्य संस्कार चित्त को भला क्यों नहीं अधिकार-विशिष्ट करेगा? अर्थात् अवश्य ही अधिकारविशिष्ट करेगा।

**समाधान**–भाष्यकार शंका का परिहार करते हैं–'**न त इति**।' चित्त के दो कार्य (कर्त्तव्य) हैं–पहला शब्दादि विषय का उपभोग और दूसरा विवेकज्ञान। इनमें से क्लेश और कर्माशय से युक्त चित्त पुरुष को शब्दादि विषय का उपभोग कराने के लिये प्रवृत्त होता है। और जब समाधिप्रज्ञाजन्य संस्कार से चित्त का क्लेश-कर्माशयरूप निखिल संस्कार उत्पाटित (अभिभूत) हो जाता है, तब समाप्ताधि-कारप्राय चित्त का विवेकख्यातिरूप कार्य ही अवशिष्ट रह जाता है। इसलिये यह कहा जाता है कि समाधिप्रज्ञा (ऋतम्भराप्रज्ञा) जन्य संस्कार चित्त के भोगाधिकार के हेतु (कारण) नहीं हैं अर्थात् चित्त को भोगाधिकारविशिष्ट नहीं करते हैं, अपितु चित्त के भोगाधिकार के विरोधी हैं। अर्थात् चित्त के भोगाधिकार को नियन्त्रित करते हैं। अर्थात् समाधिप्रज्ञाजन्य संस्कार चित्त को उसके भोगलक्षणरूप कार्य के प्रति असमर्थ बना देते हैं।

**शङ्का**–समाधिप्रज्ञाजन्य संस्कार चित्त को भोगाधिकारशून्य क्यों बना देते हैं?

**समाधान**–भाष्यकार उत्तर देते हैं–'**ख्यातिपर्यवसानं हि चित्तचेष्टितमिति**।' चित्त तभी तक भोग के लिये चेष्टा करता है अर्थात् तभी तक भोगाधिकारविशिष्ट होता है जब तक चित्त को विवेकख्याति (सत्त्वपुरुषान्यताख्याति) प्राप्त नहीं हो जाती है। विवेकख्यातिप्राप्त चित्त के (अविद्यादि) क्लेश की निवृत्ति होने पर उसका भोगाधिकार (भोगरूपव्यापार) भी अवशिष्ट नहीं रहता है अर्थात् समाप्त हो जाता है। इस प्रकार ऋतम्भराप्रज्ञाजन्य संस्कारों का उद्देश्य चित्त के भोगाधिकार को समाप्त करना है–यह सिद्धान्त सुस्थिर होता है॥५०॥

## योगवार्त्तिकम्

यथोक्तप्रज्ञायाः संस्कारजनकत्वमुत्तरसूत्रोपयोगितया प्रतिपादयति—समाधीति। ननु तथाऽपि प्रज्ञोत्पत्तिपर्यन्तं योगापेक्षाऽस्तु, प्रज्ञोत्पत्त्यनन्तरं तु पुनः संप्रज्ञातपरम्परायाः किं फलमित्याशङ्कायामाह—तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी। प्रतिबन्धः कार्यविरोधित्वम्। इदमेव बाधशब्देन भाष्यकारो वक्ष्यति।[1] सर्वेषां च [2]संस्काराणां चित्तनाशादेव नाश इत्य[3]पि भाष्ये व्यक्तीभविष्यति। सूत्रार्थं व्याचष्टे—बाधत इत्यन्तेन। आशेत इत्याशयः, संस्कारश्चासावाशयश्चेति विग्रहात् संस्काराशयमनुद्बुद्धसंस्कारमित्यर्थः। उद्बुद्धसंस्कारस्य च बाधो न संभवति; उद्बोधप्रतिबन्धस्यैव बाधशब्दार्थत्वादिति भावः। ननु वृत्तिनिरोधसंस्कारस्य व्युत्थानसंस्काराभिभावकत्वं वक्ष्यति, तत्[4]कथं समाधिप्रज्ञासंस्कारस्यापि व्युत्थानसंस्काराभिभावकत्वमिष्यत इति चेत्? न; वृत्तित्वावच्छिन्नाभावस्यैव वक्ष्यमाणयुक्त्या संस्कारजनकत्वसिद्धेर्न तु संप्रज्ञातकालीनस्य यत्किञ्चिद्वृत्तिनिरोधस्यापि, स्मृतिहेतुतया सिद्धात्प्रज्ञासंस्कारादेव व्युत्थानसंस्काराभिभवस्य वक्ष्यमाण[5]प्रयोजनस्योपपत्तेः। नन्वेकयैव प्रज्ञाव्यक्त्या तत्सन्तानव्यक्त्या चोत्पादितेन संस्कारेण व्युत्थानसंस्कारबाधसंभवे किमर्थं पुनःपुनः संप्रज्ञातानुष्ठानम्? तत्राह—व्युत्थानसंस्काराभिभवादित्यादि—ततश्च संस्कारा इत्यन्तेन। अभिभवात्= तत्करणात्। शेषं स्पष्टम्।

अयं भावः—नैकदा संप्रज्ञाते व्युत्थानसंस्कारबाधः, श्रुतिस्मृतिसिद्धस्य पुनःपुनर्व्युत्थानस्यानुपपत्तेः, उपदेशाद्यनुपपत्तेश्च; किं तु संप्रज्ञातपरम्पराजन्येन दृढतरसंस्कारेणैव तद्बाधः, अदृढैश्च प्राथमिकैः संप्रज्ञातसंस्कारैस्तस्य बाधार्थन्तनुतापरंपरैव क्रियते। तथा च संस्कारदार्ढ्यार्थं प्रज्ञासंस्कारचक्रमपेक्ष्यत इति। एतेन प्रज्ञायाः साक्षादेव व्युत्थानसंस्कारबाधकत्वशङ्काऽप्यपास्ता, एकप्रज्ञयैव संस्कारबाधे व्युत्थानासंभवात्। प्रज्ञासंस्कारे तु दृढत्वरूपवैजात्यसंभवेन तस्यैव व्युत्थानसंस्कारबाधकताऽवच्छेदकत्वकल्पनया व्युत्थानाद्युपपत्तिरिति। व्युत्थानसंस्कारेषु मध्ये चाऽविद्यासंस्कारस्यायं विशेषः—यत्सकृत्प्रज्ञाया जनितेनैव संस्कारेणाविद्यासंस्कारो बाध्यते, न तत्र प्रज्ञासंस्कारचक्रापेक्षेति। एतच्च ते प्रतिप्रसवहेयाः सूक्ष्माः इत्यागामिसूत्रद्वये प्रकटीभविष्यति। इदमत्रावधेयम्—अस्मिन्सूत्रे शेषसूत्रे चाखिलसंस्कारदाहस्य योगफलत्ववचनात् प्रारब्धकर्मणोऽप्यतिक्रमेणाशुतरमोक्षः केवलज्ञानासाध्यो योगयोरसाधारणं फलमिति। न हि भोगसंस्कारस्य निःशेषतो दाहे प्रारब्धकर्मापि फलायालम्, दृष्टकार-

---

1. ख – न तु प्रतिबन्धो नाशः योगजसंस्कारमात्रे पूर्ववदेव व्युत्थानसंस्कारस्य योगभ्रष्टेषु दर्शनात् (वक्ष्यति पश्चात्) उपलभ्यते, क ग घ च छ – न तु...दर्शनात् नोपलभ्यते।
2. ख – विद्यातिरिक्त० (संस्काराणां प्राक्) उपलभ्यते, क ग घ च छ – विद्यातिरिक्त० नोपलभ्यते।
3. क ग घ च छ – अपि उपलभ्यते, ख – अपि नोपलभ्यते।
4. क ख ग – किमर्थं, घ च छ – कथम्।
5. ख – च (प्रयोजनस्य पश्चात्) उपलभ्यते, क ग घ च क – च नोपलभ्यते।

**णाभावाद्, योगाग्निदग्धकर्मचयोऽचिरादित्यादिवाक्ये संकोचकप्रमाणाभावाच्च। ज्ञानाग्निः सर्वकर्माणीत्यादिष्वगत्या संकोचः क्रियते, तस्य तावदेव चिरमित्यादिज्ञानिविषयकश्रुतेः; उपदेशाद्यन्यथाऽनुपपत्तेश्च। साङ्ख्यवेदान्तसूत्रयोश्च ज्ञानिनामेव प्रारब्धभोगावश्यकतोक्ता। नन्वर्द्धभुक्तप्रारब्धकर्मणां नाशे तत्फलस्य कालप्रतिनियमानुपपत्तिरिति चेत्? न; शास्त्रोक्तनाशकनाश्यकर्मस्वेव कालप्रतिनियमात्, अन्यथा कर्मविपाकोक्तप्रायश्चित्तस्य शान्तिकमदिश्चार्धमुक्तपापनाशकत्वानुपपत्तिः। शास्त्रोक्तनाशकनाश्यकर्मणां तु स्वावस्थितिपर्यन्तमेव फलदातृत्वमिति दिक्। नन्वेवं प्रज्ञासंस्कारातिशयस्वीकारे ततोऽपि पुनर्जन्म भविष्यति, न चासंप्रज्ञातयोगेन तस्य नाशो भवितेति वाच्यम्, असंप्रज्ञाताभावेऽपि प्रारब्धसमाप्त्यनन्तरं केवलज्ञानतो मोक्षाभ्युपगमादित्याशङ्कते–कथमसाविति। साधिकारं स्वकार्यजननक्षमम्। परिहरति–न त इति। ते प्रज्ञासंस्काराश्चित्तं स्वकार्यक्षमं न कुर्वन्ति, जन्मकारणस्याविद्यादिक्लेशस्य विनाशनादित्यर्थः। कर्मनाशनादित्यपि बोध्यम्। कर्त्तव्यसमापनादपि साधिकारं न कुर्वन्तीत्याह–चित्तं हीति। स्वकार्यादवसादयन्ति कर्त्तव्यशून्यङ्कुर्वन्ति। तत्र हेतुः–ख्यातीत्यादि। हि यस्माच्चित्तस्य व्यापारो विवेकख्यातिपर्यन्तः,** विवेकख्याति[1]निष्पत्तौ **सत्यां प्रवर्त्तकपुरुषार्थासम्भवात्; सा च विवेकख्यातिरूपा प्रज्ञा तत्संस्कारातिशयेनानिशमुत्पद्य परवैराग्यजननद्वारेण समाप्यत इत्यर्थः॥५०॥**

पूर्ववर्णित समाधिप्रज्ञा की संस्कारजनकता को अग्रिम सूत्र में उपयोगिता की दृष्टि से प्रतिपादित किया जा रहा है–'**समाधीति**।'

**शङ्का**–प्रज्ञा की उत्पत्ति तक ही योग की अपेक्षा रहे। प्रज्ञोत्पत्ति के पश्चात् सम्प्रज्ञात-परम्परा का कोई प्रयोजन नहीं रह जाता है। अतः प्रयोजनशून्य सम्प्रज्ञात-परम्परा को मानना व्यर्थ है?

**समाधान**–ऐसी आशंका होने पर सूत्रकार कहते हैं-'**तज्ज इति**।' सूत्रगत '**प्रतिबन्ध**' शब्द का अर्थ 'कार्यविरोधित्व' है अर्थात् प्रज्ञात्मक संस्कार द्वारा व्युत्थानात्मक संस्कार के व्यापार में निरोधात्मक हस्तक्षेप किया जाना। इसी तथ्य को भाष्यकार '**बाध**' शब्द ('**बाधते**' क्रियापद) से बतलायेंगे। भाष्य में आगे यह भी स्पष्ट किया जायेगा कि निखिल संस्कारों का नाश चित्तनाश से ही होता है। भाष्यकार सूत्र का अर्थ करते हैं–'**बाधत इत्यन्तेन**।' योगवार्त्तिककार '**संस्काराशय**' का सविग्रह अर्थ करते हैं–'**आशेत इत्याशयः, संस्कारश्चासावाशयश्चेति**' इस विग्रह के अनुसार अनुद्बुद्ध संस्कार को '**संस्काराशय**' कहते हैं। उद्बुद्ध संस्कार का बाध सम्भव नहीं है। अतः संस्कारों के उद्बोधक (संस्कारों की उद्बुद्ध शक्ति) को प्रतिबन्धित करना ही '**बाध**' शब्द का अर्थ है।

---

1. ख ग घ च छ – **निष्पत्तौ सत्यां प्रवर्त्तकपुरुषार्थासम्भवात्; सा च विवेकख्यातिरूपा प्रज्ञा तत्संस्कारातिशयेन** उपलभ्यते, क – **निष्पत्तौ....शयेन** नोपलभ्यते।

**शङ्का**–चित्तवृत्तिनिरोध से उत्पन्न निरोधात्मक संस्कार द्वारा व्युत्थानात्मक संस्कार का अभिभूत होना बताया जायेगा, तो फिर समाधिप्रज्ञाजन्य संस्कार में भी व्युत्थानात्मक संस्कार की अभिभावकता क्यों कही जा रही है?

**समाधान**–वृत्तित्वावच्छिन्न अभाव अर्थात् यत्किंचिद् वृत्त्यभाव ही आगे बताई गई युक्ति से संस्कार को उत्पन्न नहीं करता है, ऐसी बात नहीं है। किन्तु सम्प्रज्ञातकालीन यत्किञ्चिद् वृत्तिनिरोध में भी वैसा संस्काराजनकत्व नहीं है, क्योंकि सम्प्रज्ञातकालीन यत्किञ्चिद्वृत्तिनिरोधजन्य संस्कार से स्मृति देखी जाती है। अतः सम्प्रज्ञातप्रज्ञाजन्य संस्कार से ही व्युत्थानसंस्कार का अभिभूत होना वक्ष्यमाण प्रयोजन के लिये स्वीकार किया गया है।

**शङ्का**–एक ही प्रज्ञारूपव्यक्ति तथा प्रज्ञासन्तानरूप व्यक्ति से उत्पन्न संस्कार के द्वारा व्युत्थानसंस्कार का बाध सम्भव होने पर फिर सम्प्रज्ञातसमाधि के भूयोभूयः अनुष्ठान का प्रयोजन क्या रह जाता है?

**समाधान**–इस पर भाष्यकार कहते हैं–'**व्युत्थानसंस्काराभिभवादित्यादि–ततश्च संस्कारा इत्यन्तेन**।' '**अभिभवात्**' पद का अर्थ है–अभिभव के कारण। अर्थात् व्युत्थानसंस्कार के अभिभव के कारण तज्जायमान प्रत्यय नहीं होता है। शेष भाष्य सुकर है।

भाव यह है–सर्वथा एक बार की सम्प्रज्ञातसमाधि में व्युत्थानसंस्कार का बाध नहीं होता है अर्थात् समाधिजन्य प्रज्ञा से व्युत्थान संस्कार सहज अभिभूत नहीं होते हैं, अन्यथा चित्त के श्रुतिस्मृतिसिद्ध पुनः-पुनः व्युत्थान की अनुपपत्ति होगी तथा सम्प्रज्ञात के बार-बार अभ्यास करने का उपदेश करना भी व्यर्थ सिद्ध होगा। अतः सुनिश्चित होता है कि सम्प्रज्ञात की परम्परा से उत्पन्न दृढतर प्रज्ञात्मक संस्कार के द्वारा ही व्युत्थानात्मक संस्कार का बाध (अभिभव) होता है तथा इन व्युत्थानात्मक प्रबल संस्कारों को निरुद्ध करने के लिये अदृढीभूत प्राथमिक सम्प्रज्ञातजन्य संस्कारों के द्वारा पहले उन्हें तन्ववस्था में ही क्रमशः पहुँचाया जाता है। अतः प्रज्ञात्मक संस्कार को दृढता प्रदान करने के लिये प्रज्ञासंस्कारचक्र की अपेक्षा रहती है। इस व्याख्यान (प्रक्रिया) से 'प्रज्ञा से एक बार में ही व्युत्थान संस्कार का बाध हो जाय'–ऐसी आशंका भी निरस्त हो जाती है, क्योंकि एक प्रज्ञा से (समाधिज ज्ञान से) ही व्युत्थानसंस्कार का अपनोदन (उन्मूलन) मानने पर साधक का व्युत्थित अवस्था में पुनः प्रत्यावर्तित होना सम्भव नहीं हो पायेगा। जब कि प्रारम्भिक प्रज्ञासंस्कार के समय दृढीभूत विजातीय व्युत्थानसंस्कार के विद्यमान रहने पर प्रज्ञासंस्कार को व्युत्थानसंस्कार के बाधकतावच्छेदक रूप से स्वीकार न किये जाने से व्युत्थानादि की उपपत्ति लग जाती है। व्युत्थानसंस्कारों के मध्य में अविद्याजन्य संस्कार का यह वैशिष्ट्य है कि एक बार की प्रज्ञा से जनित संस्कार

से ही अविद्याजन्य संस्कार का बाध हो जाता है। अतः यहाँ प्रज्ञाजन्य संस्कार और संस्कारजन्य प्रज्ञा–इत्याकारक प्रज्ञासंस्कारचक्र की अपेक्षा नहीं रहती है। यही तथ्य **'ते प्रतिप्रसवहेयाः सूक्ष्माः'** (२/१०-११) सूत्रद्वय में स्पष्ट किया जायेगा। यहाँ विचारणीय यह है कि इस सूत्र में और इस पाद के अन्तिम सूत्र में यह प्रतिपादित किया जायेगा कि योग के फल के रूप से 'अखिल संस्कार का नाश' होना कथित होने से प्रारब्धकर्म के भी अतिक्रमण द्वारा अर्थात् प्रारब्धकर्म को भी लांघकर प्राप्त होने वाला आशुतर मोक्ष; जो केवल ज्ञान से भी सिद्ध नहीं होता है, सम्प्रज्ञात और असंम्प्रज्ञात दोनों योगों का असाधारण फल है। जब कि भोगसंस्कार का निशेषतः अर्थात् पूर्णरूप से दाह हो जाने पर भी प्रारब्ध कर्म मोक्षरूप फल देने में समर्थ नहीं होता हैं, क्योंकि तब मोक्षरूप फल के साक्षात् कारण योग का अभाव रहता है। किञ्च **'योगाग्निदग्धकर्मचयोऽचिरात्'** (वि. पु. ६/७/३५) अर्थात् 'योगाग्नि कर्मपुञ्ज को त्वरित दग्ध कर देती है'–इत्यादि वाक्य में संकोच करने में कोई प्रमाण भी नहीं है। **'ज्ञानाग्निः सर्वकर्माणि'** (गीता ४/३७) वाक्य में तो विवश होकर (अगत्या) **'सर्वकर्माणि'** पद का **'प्रारब्धकर्मातिरिक्त कर्माणि'** के रूप में संकोच किया जाता है, क्योंकि **'तस्य तावदेव चिरम्'** (छ/उ. ६/१४/२) इत्यादि ज्ञानिविषयक श्रुति विद्यमान है, अन्यथा तद्विषयक उपदेश उपपन्न न हो सकेगा। सांख्य तथा वेदान्त के सूत्रों में तो ज्ञानियों के ही प्रारब्धभोग की आवश्यकता कही गई है। भाव यह है कि ज्ञानमार्ग से प्राप्त होने वाले मोक्ष में ज्ञानी को भोग द्वारा ही प्रारब्धकर्म का क्षय करना पड़ता है क्योंकि ज्ञानाग्नि द्वारा प्रारब्ध कर्म को छोड़कर सञ्चित एवं क्रियमाण कर्म भस्मीभूत होते हैं। जब कि योगमार्ग की यह महती विशेषता है कि योगाग्नि सञ्चित एवं क्रियमाण कर्म के साथ-साथ प्रारब्धकर्म को भी भस्म करती हुई योगी को त्वरित मोक्ष प्रदान करती है।

**शङ्का**–योगाग्नि द्वारा अर्द्ध भुक्त प्रारब्धकर्म का नाश मानने पर प्रारब्धकर्मजन्य फलभोग की जो कालबद्ध व्यवस्था है, वह अनुपपन्न हो जायेगी?

**समाधान**–ऐसी बात नहीं है, क्योंकि शास्त्रोक्त नाशक-नाश्य-कर्मों में ही काल का प्रतिनियम (व्यवस्था) है, अन्यथा **'कर्मविपाक'** नामक शास्त्र में प्रायश्चित्त और शान्तिकर्मादि को अर्द्धभुक्त पाप का जो नाशक बतलाया गया है, वह अनुपपन्न हो जायेगा और शास्त्रोक्त नाशक-नाश्य-कर्मों में तो अपने रहने के कालपर्यन्त ही फलदातृता मानी गई है।

**शङ्का**–प्रज्ञाजन्य संस्कार का अतिशय स्वीकार करने पर उससे भी पुनर्जन्म होगा, क्योंकि असम्प्रज्ञात योग से प्रज्ञाजन्य संस्कार का नाश नहीं हो सकता है?

**समाधान**–ऐसा नहीं समझना चाहिये, क्योंकि असम्प्रज्ञात योग के प्राप्त न होने पर भी (भोग द्वारा) प्रारब्ध कर्म की समाप्ति के पश्चात् केवल ज्ञान से मोक्ष होना स्वीकार किया गया है।

**शङ्का**–इस पर शंका की जा रही है–'**कथमसाविति**।' संस्काराशय चित्त को '**साधिकार**' अर्थात् कार्यजनन की क्षमता क्यों नहीं प्रदान करता है?

**समाधान**–भाष्यकार शंका का परिहार करते हैं–'**न त इति**।' प्रज्ञाजन्य संस्कार, चित्त को अपना व्यापार करने की क्षमता वाले नहीं बनाते हैं, क्योंकि प्रज्ञात्मक संस्कार से जन्म के हेतुभूत अविद्यादि क्लेश का नाश हो जाता है। यहाँ तक कि कर्माशय भी नष्ट हो जाता है। चित्त का भोगमोक्षरूप कर्त्तव्य समाप्त हो जाने से भी प्रज्ञात्मक संस्कार (निरुद्देश्य) चित्त को साधिकार नहीं बनाये रखते हैं। इसी तथ्य को भाष्यकार बताते हैं–'**चित्तं हीति**।' प्रज्ञाजन्य संस्कार चित्त को उसके कार्य से कर्त्तव्यशून्य कर देते हैं। इसमें कारण यह है–'**ख्यातीत्यादि**।' सत्त्वपुरुषान्यताख्याति के उदयपर्यन्त ही चित्त का व्यापार रहता है। विवेकख्याति के उदित हो जाने पर चित्त का प्रवर्त्तकीभूत (चित्त को साधिकार करने वाला) पुरुषार्थ सम्भव नहीं रहता है। और अन्त में यह विवेकख्यातिरूप प्रज्ञा संस्कारातिशय के कारण अहर्निश (प्रगाढता को प्राप्त) होती हुई परवैराग्योत्पत्ति द्वारा स्वयं भी समाप्त हो जाती है। अर्थात् गुणवैतृष्ण्यरूप परवैराग्य से विवेकख्यातिं में भी अलंबुद्धि (हेयबुद्धि) जागरित होती है, जिसके कारण वृत्त्यात्मक विवेकख्याति भी निरुद्ध हो जाती है अर्थात् सर्ववृत्तिनिरोधयुक्त चित्त हो जाता है॥५०॥

सम्प्रति, भाष्यकार अगले सूत्र को अवतरित करते हैं–

### व्यासभाष्यम्

**किं चास्य भवति–**

**शङ्का**–और इस ऋतम्भरा-प्रज्ञा से उत्पन्न संस्कार (समूह) का क्या होता है? (अथवा ऋतम्भराप्रज्ञाजन्य संस्कारविशिष्ट चित्त का और क्या कर्त्तव्य है?)–उत्तर है–

### योगसूत्रम्

## तस्यापि निरोधे सर्व[1]वृत्तिनिरोधान्निर्बीजः समाधिः ॥ ५१॥

1. **वृत्ति०** – नोपलभ्यते।

उस (प्रज्ञाजन्य संस्कार) का भी निरोध हो जाने पर सब (प्रज्ञा और प्रज्ञाजन्य समस्त संस्कारों) का निरोध हो जाने से 'निर्बीज समाधि' प्राप्त होती है ॥५१॥

व्यासभाष्यम्

स न केवलं समाधिप्रज्ञाविरोधी, प्रज्ञाकृतानां संस्काराणामपि प्रतिबन्धी भवति। कस्मात्? निरोधजः संस्कारः समाधिजान्संस्कारान्बाधत इति। निरोधस्थितिकालक्रमानुभवेन निरोधचित्तकृतसंस्कारास्तित्वमनुमेयम्। व्युत्थान-निरोधसमाधिप्रभवैः सह कैवल्यभागीयैः संस्कारैश्चित्तं स्वस्यां प्रकृताव[1]वस्थितायां [2]प्रविलीयते, [3]तस्मात्ते संस्काराश्चित्तस्याधिकार[4]विरोधिनो न स्थितिहेतवः [5]भवन्तीति। यस्मादवसिताधिकारं सह कैवल्यभागीयैः संस्कारैश्चित्तं [6]विनिवर्तते, तस्मिन्निवृत्ते पुरुषः स्वरूप[7]मात्रप्रतिष्ठोऽ[8]तः [9]शुद्धः केवलो मुक्त इत्युच्यत [10]इति॥५१॥

इति श्रीपातञ्जले सांख्यप्रवचने योगशास्त्रे श्रीमद्व्यासभाष्ये
प्रथमःसमाधिपादः॥१॥

------------xxx-----------

यह (निर्बीज समाधि) समाधि-प्रज्ञा की ही विरोधिनी नहीं है, अपितु समाधिप्रज्ञाजन्य संस्कारों का भी बाध करती है।

---

1. क ख ग घ च छ झ त थ द ध न प फ ब भ म य र – अवस्थितायां, ज – स्थितायाम्।
2. छ थ – अयं प्रकृतिलयो भवप्रत्ययोऽसंप्रज्ञातः (प्रविलीयते पश्चाद्) उपलभ्यते, क ख ग घ च झ त द ध न प फ ब भ म य र – अयं.......असंप्रज्ञातः नोपलभ्यते।
3. क ख ग घ च छ ज झ थ द ध न प फ ब भ म य र – तस्मात्, त – कस्मात्।
4. क ख ग घ च छ ज झ त थ ध न प फ ब भ म य र – विरोधिनः, द – विरोधेन।
5. क ख ग च छ ज झ त च थ द ध न फ ब भ य – भवन्तीति उपलभ्यते, घ प म र – भवन्तीति नोपलभ्यते।
6. क ख च छ ज झ त थ द ध न व भ य – विनिवर्तते, ग घ प फ म र – निवर्तते।
7. क ख ग च छ ज झ त थ ध न व भ म य – मात्र० उपलभ्यते, घ द प फ र मात्र० नोपलभ्यते।
8. घ च झ त द ध न प फ ब भ म य र – अतः उपलभ्यते, क ख ग छ ज थ – अतः नोपलभ्यते॥
9. क ख ग च छ ज झ त थ ध न ब भ म य – शुद्धः केवलो मुक्तः, घ प फ र – शुद्धमुक्तः, द – शुद्धः मुक्तः।
10. छ थ – अयं विदेहो भवप्रत्ययो ह्यसंप्रज्ञातः समाधिः (इति पूर्वं उपलभ्यते, क ख ग घ च ज झ त द ध न प फ ब भ म य र – अयं....समाधिः नोपलभ्यते।

**शङ्का**–निर्बीज समाधि संस्कारों का भी निरोध क्यों करती है?

**समाधान**–क्योंकि निरोधजन्य संस्कार (सम्प्रज्ञात) समाधि (प्रज्ञा) जन्य संस्कारों को भी बाधित करता है। निरोध की स्थिति के (न्यूनाधिक) काल के क्रम का अनुभव होने से निरोधकालिक चित्तजन्य संस्कारों का अस्तित्व अनुमेय है। व्युत्थान (लौकिक वृत्ति और उसके निरोधक सम्प्रज्ञात समाधि) का निरोध करने वाली (निर्बीज संज्ञक) निरोधसमाधि से उत्पन्न कैवल्य के अनुकूल (निरोध) संस्कारों के साथ चित्त अपने (अव्यक्त रूप से अवस्थित) मूलकारण प्रकृति में लीन हो जाता है। इसलिये ये (निरोध) संस्कार चित्त के अधिकार (व्यापार) के विरोधी होते हैं, चित्त की स्थिति के हेतु नहीं होते हैं। क्योंकि समाप्ताधिकार चित्त कैवल्यभागीय संस्कारों के साथ निवृत्त (निरुद्ध) हो जाता है। संस्कारसहित चित्त के निरुद्ध होने पर पुरुष अपने स्वरूप में प्रतिष्ठित हो जाता है। अतः वह शुद्ध, केवल तथा 'मुक्त' कहा जाता है॥५१॥

------------xxx-----------

## तत्त्ववैशारदी

**पृच्छति–किं चेति। किं चास्य भवति प्रज्ञासंस्कारवच्चित्तं प्रज्ञा**[1]संस्कारप्रवाहजनकतया **तथैव** साधिकारमित्यधिकारापनुत्तयेऽन्यदपि किंचिदपेक्षणीयमस्तीत्यर्थः। सूत्रेणोत्तरमाह–**तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः**। परेण वैराग्येण ज्ञानप्रसादमात्रलक्षणेन **संस्कारो**[2]**पजननद्वारा तस्यापि प्रज्ञाकृतस्य संस्कारस्य निरोधः**, न केवलं प्रज्ञाया इत्यपि-**शब्दार्थः। सर्वस्योत्पद्यमानस्य संस्कार**[3]**प्रज्ञाप्रवाहस्य निरोधात्कारणाभावेन कार्या**[4]**नुत्पादा-त्**[5]**सोऽयं निर्बीजः समाधिः। व्याचष्टे–स इति।**[6] **सः निर्बीजः समाधिः समाधिप्रज्ञाविरोधिनः परस्माद्वैराग्यादु**[7]**पजायमानः स्वकारणद्वारेण न केवलं समाधिप्रज्ञाविरोधी प्रज्ञाकृतानामप्यसौ संस्काराणां परिपन्थी भवति।**

**शङ्का**–प्रश्न किया जा रहा है–'**किं चेति**।' ऋतम्भरा प्रज्ञाजन्य संस्कारयुक्त चित्त; प्रज्ञा-संस्कार के प्रवाह का जनक होने से (व्युत्थानकाल के भोगाधिकार के समान) इस काल में भी अधिकारयुक्त ही है। अतः ऐसे 'साधिकार चित्त' (चित्त-व्यापार) के उच्छेद के लिये योगी का कुछ अन्य कर्त्तव्य है अथवा नहीं?

---

1. घ च छ – **संस्कार०** उपलभ्यते, क ख ग ज झ त थ द ध न – **संस्कार०** नोपलभ्यते।
2. क ख ग घ च छ ज झ त न – **उपजनन०**, थ द ध – **उपजन०**।
3. ख ग घ च छ ज झ त न – **प्रज्ञा** उपलभ्यते, क थ द ध – **प्रज्ञा** नोपलभ्यते।
4. क घ च छ ज झ त न – **अनुत्पादात्**, ख ग थ द ध – **अनुत्पादनात्**।
5. क ख ग घ च छ थ द ध न – **सोऽयं** उपलभ्यते, ज झ त – **सोऽयं** नोपलभ्यते।
6. थ द ध – **स इति** उपलभ्यते, क ख ग घ च छ ज झ त न – **स इति** नोपलभ्यते।
7. क ख ग घ च छ ज झ त न – **उपजायमानः**, थ द ध – **जायमानः**।

**समाधान**–सूत्र द्वारा उत्तर दिया जा रहा है–'**तस्येति**।' ज्ञानप्रसादमात्रलक्षणक परवैराग्य के द्वारा निरोधसंस्कार की वृद्धि से न केवल ऋतम्भरा-प्रज्ञा का, अपितु प्रज्ञाकृत (प्रज्ञाजन्य) संस्कार का भी निरोध हो जाता है। यही सूत्र के '**अपि**' शब्द का अर्थ है। इस प्रकार उत्पन्न हुए समस्त संस्कारप्रज्ञाप्रवाह का निरोध होने से, कारण (संस्कार) का अभाव हो जाने से कार्य (प्रज्ञारूप वृत्ति) की भी उत्पत्ति नहीं होती है। चित्त की यही अवस्था '**निर्बीज समाधि**' कही जाती है। भाष्यकार सूत्र की व्याख्या करते हैं–'**स इति**।' समाधि-प्रज्ञा (विवेकख्याति) के विरोधी '**परवैराग्य**' से उदित हुई यह '**निर्बीज समाधिः**' अपने कारणीभूत परवैराग्य के माध्यम से, केवल समाधिप्रज्ञा की प्रतिबन्धिका नहीं है, अपितु यह समाधिप्रज्ञाजन्य संस्कारों की भी विरोधिनी है अर्थात् प्रज्ञात्मक संस्कार के वृत्तिरूप कार्य को नहीं होने देती है।

**बालप्रिया**–

'**समाधिप्रज्ञाविरोधिनः परस्माद्वैराग्यात्**'–वाक्यांश के स्पष्टीकरणार्थ पूर्ववर्णित 'तत्परं **पुरुषख्यातेर्गुणवैतृष्ण्यम्** १/१६ सूत्र स्मरणीय है, जिसमें परवैराग्य द्वारा विवेकख्याति (समाधिप्रज्ञा) के प्रति हेयबुद्धि जागरित होना बतलाया गया है।

निर्बीज समाधि से प्रज्ञाकृत संस्कार का बाध (निरोध) होता है–इस तथ्य को लेकर अग्रिम विचार प्रस्तुत हो रहा है–

## तत्त्ववैशारदी

**ननु वैराग्यजं विज्ञानं सद्विज्ञानं प्रज्ञामात्रं बाधताम्। संस्कारं त्वविज्ञानरूपं कथं बाधते। दृष्टा हि जाग्रतोऽपि स्वप्नदृष्टार्थे स्मृतिरित्याशयवान्पृच्छति–कस्मादिति। उत्तरमा[1]ह–निरोधज इति। निरुध्यतेऽनेन प्रज्ञेति निरोधः परं वैराग्यम्। ततो जातो निरोधजः संस्कारः संस्कारादेव दीर्घकालनैरन्तर्यसत्कारासेवितपरवैराग्यजन्मनः प्रज्ञासंस्कारबाधो न तु विज्ञानादित्यर्थः।**

**शङ्का**–परवैराग्यजनित गुणवैतृष्ण्यरूप विज्ञान (जो निर्बीज समाधि का कारण है) यथार्थविषयक ( '**इयमपि हेयम्**' रूप ) विज्ञान है। अतः परवैराग्यजन्य विज्ञान (अपनी अपेक्षा दुर्बल) समाधिज प्रज्ञामात्र का बाध करे। किन्तु उक्त विज्ञान से अविज्ञानरूप संस्कार का बाध (निरोध) कैसे हो सकता है? अर्थात् विज्ञान से संस्कार का निरोध सम्भव नहीं है, (क्योंकि परवैराग्यजनित विज्ञान की समाधिप्रज्ञा=समाधिविज्ञान के साथ ही प्रतिद्वन्द्विता=परिपन्थिता हो सकती है, तज्जन्य संस्कार के साथ नहीं), क्योंकि स्वप्न में होने वाले ज्ञान (दृष्टार्थ) के विषय में जागरित अवस्था में भी स्मृति देखी जाती है जब कि आपके अनुसार

1. **थ द ध – आह** उपलभ्यते, क ख ग घ च छ ज झ त – **आह** नोपलभ्यते।

स्वाप्निक पदार्थविषयक संस्कार का भी जागरितकालिक विज्ञान से बाध होने पर तद्विषयक स्मृति नहीं होनी चाहिये। अतः निर्बीज समाधिज विज्ञान से प्रज्ञासंस्कार का बाध कहना उचित नहीं है। इसी आशय से पूर्वपक्षी पूछता है–'**कस्मादिति**।'

**समाधान**–भाष्यकार उत्तर देते है–'**निरोधज इति**।' '**निरुध्यतेऽनेन प्रज्ञेति निरोधः**' के अनुसार जिसके द्वारा प्रज्ञा निरुद्ध होती है, उसे '**निरोध**' कहते हैं और यह 'निरोध' '**परवैराग्य**' रूप है। परवैराग्यजनित निरोध से निरोध-संस्कार उत्पन्न होता है। सुदीर्घ काल तक व्यवधानरहित होकर निष्ठापूर्वक अनुष्ठित (अभ्यसित) परवैराग्य से जायमान संस्कार के द्वारा ही ऋतम्भरा-प्रज्ञाजन्य संस्कार का बाध होता है, न कि विज्ञान (परवैराग्य) से संस्कार का बाध (निरोध) होता है। इस प्रकार ऋतम्भरा-प्रज्ञाजन्य संस्कार के निरुद्ध होने में किसी प्रकार की अनुपपत्ति नहीं आती है।

जिस निरोधज संस्कार से ऋतम्भराप्रज्ञाजन्य संस्कार का निरुद्ध होना प्रतिपादित हुआ है, उस निरोधजसंस्कार के विषय में विचार प्रस्तुत हो रहा है–

## तत्त्ववैशारदी

**स्यादेतत्–निरोधजसंस्कारसद्भावे किं प्रमाणम्? स हि प्रत्यक्षेण वानुभूयेत, स्मृत्या वा कार्येणानुमीयेत। न च सर्ववृत्तिनिरोधे प्रत्यक्षमस्ति योगिनः। नापि स्मृतिः, तस्य वृत्तिमात्रनिरोधतया स्मृति[1]जनकत्वासंभवादित्यत आह–निरोधेति। निरोधस्थितिश्चित्तस्य [2]निरुद्धावस्थे[3]त्यर्थः। तस्याः कालक्रमो मुहूर्तार्द्धयामयामाहोरात्रादिस्तदनुभवेन। एतदुक्तं भवति–वैराग्याभ्यासप्रकर्षा[4]नुरोधी निरोधप्रकर्षो मुहूर्तार्द्धयामादिव्यापितयानुभूयते योगिना। [5]न च परवैराग्यक्षणाः क्रमनियततया परस्परमसंभवन्तस्तत्तत्कालव्यापितया सातिशयं निरोधं कर्तुमीशत इति तत्तद्वैराग्यक्षणप्रचयजन्यः स्थायी [6]संस्कारप्रचय एषितव्य इति भावः।**

**शङ्का**–निरोधजन्य संस्कार से ऋतम्भराप्रज्ञाजन्य संस्कार का बाध होना भले ही माना जाय, किन्तु निरोधजन्य संस्कार के सद्भाव (अस्तित्व) में ही क्या प्रमाण है? क्या, वह प्रत्यक्ष से अनुभूत होता है अर्थात् निरोधज संस्कार प्रत्यक्ष का विषय है अथवा वह स्मृतिरूप कार्य से अनुमित होता है अर्थात् तद्विषयक स्मरणात्मक ज्ञान से उसका अनुमान किया जाता है–ये दो विकल्प हैं। इन दोनों विकल्पों की

---

1. क ख – **जनन०**, ग घ च छ ज झ त थ द ध न – **जनकत्व०**,
2. क च – **निरोध०**, ख ग घ छ ज झ त थ द ध न – **निरुद्ध०**।
3. क ख ग घ च छ ज झ त न – **इत्यर्थः** उपलभ्यते, थ द ध – **इत्यर्थः** नोपलभ्यते।
4. क ख ग घ च छ थ द ध न – **अनुरोधी निरोधप्रकर्षः**, ज – **अनुरोधी निरोधप्रकर्षो**, झ त – **अनुरोधप्रकर्षः**।
5. क ख ग घ च छ ज झ त ध द ध–**न** उपलभ्यते, झ – **न** नोपलभ्यते।
6. क ख ग घ च छ झ त थ द ध न – **संस्कारप्रचयः**, ज – **संस्कारः**।

असम्भाव्य-स्थिति को स्पष्ट करता हुआ स्वयं पूर्वपक्षी कहता है कि (१) निरोधजन्य संस्कार को प्रत्यक्ष का विषय कहना समीचीन नहीं है, क्योंकि योगमत में चित्तवृत्ति को ही प्रमाण कहते हैं और इस काल में योगी के चित्त की समस्त वृत्तियों के निरुद्ध हो जाने पर (वृत्त्यभाव के कारण) प्रत्यक्ष प्रमाण प्रवृत्त नहीं हो सकता है। (२) यदि कहें कि स्मृतिरूप कार्य से निरोधजसंस्कार अनुमित होता है, तो यह कथन भी सम्भव नहीं (समीचीन नहीं) है। क्योंकि समस्त वृत्तियों के निरुद्ध हो जाने पर उस स्वरूपसत् निरोधसंस्कार में स्मृतिजनकता ही कहाँ है? अतः निरोधजसंस्कार के सद्भाव में कोई प्रमाण न होने से जब निरोधसंस्कार ही नहीं है, तो उससे प्रज्ञासंस्कार के निरोध (बाध) की चर्चा निराधार प्रतीत होती है। **समाधान**–इस पर भाष्यकार कहते हैं–'**निरोधेति**' भाष्यस्थ '**निरोधस्थिति**' पद का अर्थ है–चित्त की निरुद्धावस्था। अर्थात् '**निरोध**' चित्त की एक अवस्थाविशेष है। चित्त की इस निरुद्धावस्था का मुहूर्त, अर्द्धयाम, याम (प्रहर) तथा अहोरात्र (दिन-रात) आदि कालक्रम से अनुभव किया जाता है। तात्पर्य (स्पष्टीकृत रूप) यह है–परवैराग्य के दीर्घकालीन अभ्यासोत्कर्ष पर अवलम्बित चित्त की निरुद्धावस्था की जो दृढ़ता है, वह मुहूर्त, अर्द्धयाम आदि से परिव्याप्त होकर योगी द्वारा अनुभूत होती है। क्रमविशिष्ट अर्थात् तत्तत् क्षणविशिष्ट होने से परस्पर सम्मिलित न रहने वाले परवैराग्यात्मक क्षण एक साथ प्रज्ञाजन्य संस्कारों का निरोध करने में समर्थ नहीं होते हैं, अपितु तत्तद् वैराग्यक्षण की वृद्धि से उत्पन्न निरोधसंस्कारसमूह की क्रमशः वृद्धिपूर्वक प्रज्ञाजन्य संस्कारों का निरोध होता है।

**बालप्रिया**–

'**निरोधप्रकर्षो...अनुभूयते**'–भाव यह है कि चित्त की निरुद्धभूमि में योगी की समस्त वृत्तियाँ युगपत् निरुद्ध नहीं होती हैं, अपितु वे क्रमशः निरुद्ध होती हैं। अर्थात् जैसे-जैसे परवैराग्य के अभ्यासक्रम में वृद्धि होती जाती है, वैसे-वैसे वृत्ति और तज्जन्य संस्कारों का निरोध होता जाता है। इस क्रम से प्रज्ञासंस्कारों के अपचयपूर्वक निरोध-संस्कारों का उपचय होता है। इन प्रज्ञासंस्कारों के न्यूनतारूप कार्यलिङ्गक अनुमान से निरोधसंस्कारों की सत्ता अनुमित होती है। क्योंकि निरोधसंस्कार के विना प्रज्ञासंस्कार का अपक्षय होना सम्भव नहीं है। इस प्रकार निरोधसंस्कार की अनुमित सत्ता पूर्ववर्णित सिद्धान्त को समीचीन सिद्ध करती है कि निरोधसंस्कार से प्रज्ञासंस्कार का बाध होता है।

निरोधसंस्कार से प्रज्ञासंस्कार के निरुद्ध होने की मान्यता के सिद्ध हो जाने के पश्चात् सम्प्रति, निरोधसंस्कार के निरोध के विषय में विचार प्रस्तुत हो रहा है–

तत्त्ववैशारदी

**ननूच्छिद्यन्तां प्रज्ञासंस्काराः, निरोधसंस्कारास्तु कुतः समुच्छिद्यते? अनुच्छेदे वा साधिकारत्वमेवेत्यत आह–व्युत्थानेति। व्युत्थानं च तस्य निरोधसमाधिश्च संप्रज्ञातस्तत्प्रभवाः संस्काराः कैवल्यभागीया निरोधजाः संस्कारा इत्यर्थः। व्युत्थानप्रज्ञासंस्काराश्चित्ते प्रलीना इति भवति चित्तं व्युत्थानप्रज्ञासंस्कारवत्। निरोधसंस्कारस्तु प्रत्युदित एवास्ते चित्ते। निरोधसंस्कारे सत्यपि चित्तमनधिकारवत्। पुरुषार्थजनकं हि चित्तं साधिकारं शब्दाद्युपभोगविवेकख्याती च तथा [1]पुरुषार्थौ। संस्कारशेषतायां तु न बुद्धेः प्रतिसंवेदी पुरुष इति नासौ पुरुषार्थः। विदेह- प्रकृतिलयायां न निरोधभागितया साधिकारं चित्तम्, अपि तु क्लेशवासितत- येत्याश- यवानाह–यस्मादिति। शेषं सुगमम्॥५१॥**

**शङ्का**–निरोधसंस्कार से प्रज्ञासंस्कार का उच्छेद भले ही हो, किन्तु निरोधसंस्कार का उच्छेद कैसे होगा? किञ्च निरोधसंस्कार का उच्छेदक कोई उपायान्तर न होने से यदि निरोधसंस्कार को विद्यमान माना जाय तो निरोध (संस्कारविशिष्ट) चित्त को साधिकार (अचरितार्थाधिकार) कहना पड़ेगा? इसका परिणाम यह होगा कि योगी को कभी कैवल्य प्राप्त नहीं हो सकेगा, क्योंकि निरधिकार चित्त ही कैवल्योन्मुख होता है।

**समाधान**–इस पर भाष्यकार कहते हैं–'**व्युत्थानेति**।' चित्त की व्युत्थानावस्था की दृष्टि से निरोधसमाधिरूप सम्प्रज्ञात समाधि से उत्पन्न संस्कार कैवल्यभागीय निरोधज-संस्कार होते हैं। (असम्प्रज्ञात की दृष्टि से) व्युत्थानात्मक प्रज्ञासंस्कार चित्त में प्रलीन हो जाते हैं–ऐसा कहने का तात्पर्य यह है कि चित्त व्युत्थानात्मक प्रज्ञासंस्कारवत् हो जाता है। निरोधसंस्कार तो विवेकख्यातिप्राप्त चित्त में ही प्रादुर्भूत होता है। अतः निरोधसंस्कार के रहने पर भी चित्त अनधिकार अर्थात् समाप्ताधिकारवत् हो जाता है। जो चित्त पुरुषार्थ का जनक होता है, उसे '**साधिकार**' कहते हैं। वे दो पुरुषार्थ हैं–शब्दादिविषय का उपभोग तथा विवेकख्याति का उदय। चित्त की संस्कारशेषावस्था में 'पुरुष बुद्धि का प्रतिसंवेदी' नहीं रहता है–अतः चित्त का भोगापवर्गरूप पुरुषार्थ भी अवशिष्ट नहीं रहता है। इस अवस्था में विदेह तथा प्रकृतिलीन (भवप्रत्ययक) साधकों का साधिकार चित्त निरोधभागीयरूप से स्थित नहीं रहता है, अपितु क्लेशवासना से युक्त रहता है। अतः कैवल्यसम अवस्था की अवधि की समाप्ति पर वे संसार में पुनः प्रत्यावर्त्तित होते हैं। इसी आशय को ध्यान में रखते हुए भाष्यकार कहते हैं–'**यस्मादिति**।' अर्थात्

---

1. ग थ द ध ा – **पुरुषार्थौ**, घ च छ ज झ त – **पुरुषार्थः**, क ख – **पुरुषार्थौ/पुरुषार्थः** नोपलभ्यते।

कैवल्यभागीय संस्कारों के साथ निवृत्त (निरुद्ध) हो जाता है। आगे का भाष्य सरल है॥५१॥

वाचस्पति मिश्र प्रथम पाद में वर्णित विषयों का संकलनात्मक श्लोक प्रस्तुत करते हुए प्रथम पाद की व्याख्या समाप्त करते हैं–

तत्त्ववैशारदी

योगस्योद्देशनिर्देशौ तदर्थं वृत्तिलक्षणम्।
[1]योगोपायाः प्रभेदाश्च पादेऽस्मिन्नुपवर्णिताः॥१॥

**इति श्रीवाचस्पतिमिश्रविरचितायां पातञ्जलयोगसूत्रभाष्यव्याख्यायां तत्त्ववैशारद्यां प्रथमःसमाधिपादः॥१॥** 14-9-2005

योग का '**उद्देश**' अर्थात् नाममात्र से कथन, योग का '**निर्देश**' अर्थात् योगलक्षण, तदर्थ 'वृत्तिलक्षण', योग के 'उपाय' तथा योग के 'भेद'–ये (पांच) विषय प्रथम पाद में प्रतिपादित हुए हैं॥१॥

**बालप्रिया–**

**उद्देशनिर्देशौ**–पद का अर्थ है–योगारम्भ की प्रतिज्ञा तथा प्रतिज्ञानुसार योगलक्षण।

'**योगोपायाः**'–अभ्यास और वैराग्यादि योगोपाय हैं।

**तत्प्रभेदाः**–वितर्क, विचारादि योग के प्रभेद हैं॥१॥

*इस प्रकार वाचस्पतिमिश्रविरचित पातञ्जलयोगसूत्रभाष्य की तत्त्ववैशारदी टीका पर लिखी गई 'सपाठभेद बालप्रियाख्य' हिन्दी व्याख्या का यह प्रथम समाधिपाद है।*

-------------xxx-----------

योगवार्त्तिकम्

**क्षीणवृत्तेरित्यादि[2]सूत्रैः संप्रज्ञातस्य [3]फलादिकमुक्तम्। इदानीमसंप्रज्ञातस्य फलादेः सूत्रं प्रवर्त्तिष्यते, तत्सूत्रं प्रज्ञासंस्कारा[4]तिशयस्य पुनर्जन्माहेतुत्वे हेत्वन्तरपरतयाऽवतारयति–किं चास्येति। तस्य प्रज्ञासंस्कारस्यान्यच्च फलं सर्ववृत्तितत्संस्कारयोर्निरोधो भवतीति न पुनर्जन्म-संभावनेत्यर्थः। तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः। पूर्वपूर्वासंप्रज्ञाते**

---

1. क ख ग घ च छ ज झ त द न – **योगोपायाः**, थ – **योगोपायास्तत्**, ध – **योगोपात्ताः**।
2. क ग घ च छ – **सूत्रैः**, ख – **सूत्रे**।
3. क ग घ च छ – **फलादिकमुक्तम्। इदानीमसंप्रज्ञातस्य** उपलभ्यते, ख – **फल....तस्य** नोपलभ्यते।
4. अ ख ग घ च छ – **अतिशयस्य पुनर्जन्माहेतुत्वे हेत्वन्तरपरतयाऽवतारयति – किं चास्येति। तस्य** उपलभ्यते, क – **अतिशयस्य....तस्य** नोपलभ्यते।

**तावत्प्रज्ञैव निरुध्यते, प्रज्ञासंस्कारस्य तु तानवमात्रं भवति। एवं क्रमेण तु तस्यापि प्रज्ञाकृत-संस्कारस्याप्यसंप्रज्ञातपरम्परया निरोधेऽत्यन्ताभिभवे जायमाने चरमासम्प्रज्ञातो निर्बीजयोगस्य पराकाष्ठा भवत्यपुनर्व्युत्थानेत्यर्थः। सर्वनिरोधादिति सूत्रावयवेन निर्बीजत्वे हेतुरुक्तः। यतः[1] प्रज्ञा तत्संस्कारश्च सर्वोऽप्यत्यन्तं [2]विलयमितोऽतोनिर्बीजः, दुःखबीजैः संस्कारादिभिः शून्य इत्यर्थः। पूर्वपूर्वासम्प्रज्ञातव्यक्तिषु च क्रमेण बीजतानवाद् गौणं निर्बीजत्वमसंप्रज्ञातलक्षणे पूर्वं[3] भाष्यकृतोक्तमिति स्मर्त्तव्यम्। तथा च चरमासम्प्रज्ञाते सर्वे प्रज्ञासंस्कारा: क्षीयन्त इत्यतो न ते चित्तं साधिकारं कुर्वन्तीति भावः। एतेनासंप्रज्ञातपरंपरायाः प्रज्ञासंस्कारात्यन्तलयः फलं सूत्रेणोक्तम्।**

पीछे '**क्षीणवृत्तेः**' १/४१ इत्यादि सूत्रों द्वारा, सम्प्रज्ञात समाधि के फलादि को प्रतिपादित किया गया। सम्प्रति, असम्प्रज्ञात समाधि के फलादि का प्रतिपादक सूत्र प्रस्तुत किया जायेगा। भाष्यकार उस अग्रिम सूत्र को–'प्रज्ञासंस्कारातिशय को पुनर्जन्म का हेतु न होने के हेत्वन्तररूप से'-अवतरित करते हैं अर्थात् किस प्रकार विवेकख्यातिजन्य संस्कार पुनर्जन्म का कारण नहीं होता है, इसे प्रकारान्तर से अवतरित करते हैं–'**किं चास्येति**।' प्रज्ञासंस्कार का दूसरा फल सभी वृत्तियों का निरोध करते हुए तज्जन्य संस्कार का भी निरोध करना है, जिससे पुनर्जन्म की सम्भावना न रहे। सूत्र है–'**तस्येति**।' पूर्व-पूर्व असम्प्रज्ञात में अर्थात् असम्प्रज्ञात की प्रारम्भिक अवस्था में तो प्रज्ञात्मक वृत्ति का ही निरोध होता है तथा प्रज्ञाजन्य संस्कार की तो तनुतामात्र होती है अर्थात् प्रज्ञात्मक संस्कार को शिथिलप्राय किया जाता है। इस 'असम्प्रज्ञातपरम्परा के क्रम से '**तस्यापि**' अर्थात् प्रज्ञाकृत संस्कार का भी '**निरोध**' अर्थात् आत्यन्तिक अभिभव हो जाने पर चरम असम्प्रज्ञात अर्थात् '**निर्बीजयोग**' की पराकाष्ठा होती है अर्थात् प्रज्ञावृत्ति के उदयपूर्वक पुनः व्युत्थित अवस्था योगी की नहीं होती है। सूत्रकार ने '**सर्वनिरोधादिति**' सूत्रांश द्वारा असम्प्रज्ञात के '**निर्बीज**' होने का कारण यह बताया है कि (चित्त की इस अवस्था में) प्रज्ञावृत्ति और तज्जन्य संस्कार सभी का आत्यन्तिक लय हो जाता है। अतः असम्प्रज्ञात को '**निर्बीज**' कहते हैं। संस्कारादि दुःख-बीजों की शून्यता ही '**निर्बीज**' है। असम्प्रज्ञात के पूर्व-पूर्व अवस्थाभेदों में (पूर्व-पूर्व असम्प्रज्ञात व्यक्तियों में) इन संस्कारादिरूप बीज की क्रमशः तनुता होती है। अतः प्राथमिक असम्प्रज्ञात में 'अप्रधान निर्बीजता' है, ऐसा भाष्यकार असम्प्रज्ञात के लक्षण में पहले बतला चुके हैं। अन्तिम असम्प्रज्ञात में प्रज्ञाजन्य अखिल संस्कार क्षीण हो जाते हैं, अतः वे

---

1. क ग घ च छ – **यतः** उपलभ्यते, ख – **यतः** – नोपलभ्यते।
2. क ग च छ – **विलयमितोऽतो निर्बीजः**, ख – **विलायितो निर्बीजः**, घ – **विलयितोऽतो निर्बीजः**।
3. क – **पूर्व०**, ख ग घ च छ – **पूर्वम्**।

प्रज्ञासंस्कार चित्त को अधिकारविशिष्ट (साधिकार) नहीं करते हैं। इस प्रकार असम्प्रज्ञात-परम्परा (असम्प्रज्ञातावस्था के नैरन्तर्य) से 'प्रज्ञा-संस्कार का आत्यन्तिक लय' होना असम्प्रज्ञात का फल है, ऐसा सूत्र से विवक्षित है।

### योगवार्त्तिकम्

सूत्रस्थस्यापिशब्दस्यार्थं भाष्यकारो व्याचष्टे–स न केवलमिति। स सामान्य-निर्बीजयोगः, न केवलं समाधिप्रज्ञाया विरोधी भावाभावरूपेण, अपि तु क्रमेण प्रज्ञाकृत-संस्काराणामपि प्रतिबन्धी=अत्यन्तमभिभावक इत्यर्थः। ननु यदि प्रज्ञाकृतसंस्काराणामप्य-सम्प्रज्ञातो[1] बाधकस्तर्हि सकृदसम्प्रज्ञातादेव सर्वसंस्कारबाधे व्युत्थानं कदाऽपि कस्यापि न स्यादित्याशयेनाक्षिपति–कस्मादिति। परिहरति–[2]निरोधज इति। न निरोधः साक्षादेव प्रज्ञासंस्कारान् विलापयति किं तु निरोधपरंपराजन्यो दृढतरः संस्कार एव प्रज्ञासंस्कारानत्यन्तं विलापयतीत्यर्थः। दृढतरत्वं च जातिविशेष इत्युक्तम्। ननु ज्ञानस्यैव संस्कारजनकत्वं दृष्टम्, निरोधस्तु न ज्ञानं संस्कारशेषचित्तावस्थाविशेषमात्रत्वाद[3]तस्तस्य संस्कारजनकत्वे किं प्रमाणमित्याशङ्क्याह–निरोधस्थितीति। निरोधस्थितावसम्प्रज्ञातावस्थाने यो मुहूर्त्ताहोरात्र-मासादिरूपः कालक्रमः क्रमेण कालवृद्धिस्तद्दर्शनेन निरोधावस्थचित्तजन्यः संस्कारोऽनुमेयः, संस्कारवृद्धिव्यतिरेकेण तन्नियामकासम्भवादित्यर्थः। सम्प्रज्ञातस्य तु क्रमेण[4] कालवृद्धिः प्रज्ञासंस्कारतारतम्येनैवोपपद्यत इत्यतो न सम्प्रज्ञातस्य संस्कारहेतुतेति। ननु प्रज्ञासंस्कारश्चर-मासम्प्रज्ञातेनात्यन्तं बाध्यताम्, निरोधसंस्कारास्तु कुतः समुच्छिद्यन्ते तदनुच्छेदे च साधिकारत्वमेव चित्तस्येति मोक्षानुपपत्तिः। किं च प्रलीनानामपि संस्काराणां कदाचिद्योगीश्वरसंकल्पादिना दग्धबीजस्येव पुनरुद्बोधोऽपि सम्भाव्येतेत्याशङ्कामपाकरोति–व्युत्थाननिरोधेति। असम्प्रज्ञातापेक्षया समाधिप्रज्ञाऽपि व्युत्थानम्। अतो व्युत्थानं ज्ञानसामान्यं निरोधसमाधिश्चासम्प्रज्ञातस्तदुभयप्रभवैः सह=सहितैः कैवल्यभागीयैः=कैवल्यहेतु[5]कर्मसंस्कारै-र्विशिष्टं चित्तं स्वकीयप्रकृतौ नित्यायां स्वयमेव प्रलीयते=दग्धेन्धनानलवदात्यन्तिकलयं गच्छति परिणामस्वाभाव्यात्; तत्स्वामिपुरुषस्य भोगहेतुर्विसदृशपरिणाम एव हि पुनर्न भवति, तद्धेतोः पुरुषार्थस्याभावादित्यर्थः। अथ वा कैवल्यभागीयैः कैवल्यपर्यन्तस्थायिभिर्व्युत्थान[6]-

---

1. क ख ग घ – असंप्रज्ञातः, च छ – संप्रज्ञातः।
2. क ग घ – निरोधः, ख च छ – निरोधजः।
3. क ग घ च छ – अतः, ख – प्रयत्नविशेषरूपत्वाद्वा।
4. क ख ग घ – क्रमेण उपलभ्यते, च छ – क्रमेण नोपलभ्यते।
5. क ग घ च छ – कर्म० उपलभ्यते, ख – कर्म० नोपलभ्यते।
6. क ख ग – आदि० (व्युत्थान० पश्चात्) उपलभ्यते, घ च छ – आदि० नोपलभ्यते।

**संस्कारैः सहेति चित्तविशेषणम्। अनेन सूत्रेण [1]शङ्कानिराकरणमुपपादयति–तस्मादिति। तस्मान्निरोधसंस्कारस्यापि क्षयात्ते निरोधसंस्कारा इत्यादिरर्थः। ननु भवतु योगद्वयाच्चित्तस्यात्यन्तिकलयस्तथाऽपि पुरुषार्थः कः सिध्यतीत्याकाङ्क्षायामाह–यस्मादित्यादि। यस्माच्चित्तं निवर्ततेऽतस्तस्मिन्निवृत्ते सति पुरुषो मुक्त इत्युच्यते। तत्र हेतुगर्भविशेषणानि–[2]स्वरूपेत्यादीनि। स्वरूपमात्रप्रतिष्ठः पर[3]रूपैः प्रतिबिम्बितदुःखादिभिर्मुक्तः शुद्धः=स्वत्वसम्बन्धेन पुण्य[4]पापमुक्तः, भोगसाधनत्वस्यैव स्वत्वतया कूटस्थस्यापि संसारदशायां** [5]स्वत्वाभ्युपगमात् **एतादृशमुक्तेः साध्यत्वमुपपन्नम्। केवलः=उपाधिसंयोगाख्यबन्धमुक्त इत्यर्थः। [6]एवंरूपो मोक्ष एव योगस्य मुख्यं फलमित्याशयः। पारमार्थिको दुःखकर्मादिसम्बन्धो लेपाख्यसंयोगरूपसम्बन्धो वा लोके बन्ध इत्युच्यते, तन्मुक्तिश्च बुद्धेरेव न कूटस्थस्यासङ्गस्य पुरुषस्येति प्रतिपादयितुं मुक्त इत्युच्यत इत्युक्तम्। शास्त्रेषु मुक्त इति व्यवहारमात्रं क्रियत इति तस्यार्थः। तदुक्तं साङ्ख्यसूत्रेण–वाङ्मात्रं न तु तत्त्वं चित्तस्थितेः इति। पुरुषे बन्धादिकं वाङ्मात्रं चित्त एव बन्धाद्यवस्थानादित्यर्थः। पुरुषार्थत्वं च पारमार्थिकमेव, दुःखं मा [7]भुञ्जीयेति प्रार्थनादिति भावः।**

भाष्यकार सूत्रगत **'अपि'** शब्द का अर्थ करते हैं–**'स न केवलमिति।' 'सः'** अर्थात् सामान्य निर्बीजयोग भावाभावरूप से केवल समाधिप्रज्ञा का विरोधी नहीं होता है, अपितु प्रज्ञाजन्य संस्कारों का भी **'प्रतिबन्धी'** अर्थात् आत्यन्तिक नाश (अभिभव) करने वाला होता है।

**शङ्का**–यदि **'असम्प्रज्ञात',** प्रज्ञाकृत संस्कारों का भी बाधक है तो एक बार की असम्प्रज्ञात दशा से ही यच्च-यावत् संस्कारों का बाध (नाश) हो जाने पर किसी भी असम्प्रज्ञातप्राप्त योगी की कभी भी व्युत्थित दशा नहीं हो पायेगी अर्थात् व्युत्थान न होगा? इसी आशय से पूर्वपक्षी आक्षेप करता है–**'कस्मादिति।'** अर्थात् निर्बीज समाधि अपने कारणभूत परवैराग्य द्वारा प्रज्ञासंस्कार का भी प्रतिबन्धी क्यों है?

**समाधान**–आक्षेप का परिहार करते हुए भाष्यकार कहते हैं–**'निरोधज इति।' 'निरोध'** अर्थात् असम्प्रज्ञात साक्षात् ही प्रज्ञाजन्य संस्कारों का लय (नाश) नहीं करता है, अपितु निरोधपरम्परा से जन्य दृढतर संस्कार ही प्रज्ञाजन्य संस्कारों का आत्यन्तिक

---

1. ख ग – **पूर्वोक्त०** (**शङ्का प्राक्**) उपलभ्यते, क घ च छ – **पूर्वोक्त०** नोपलभ्यते।
2. क ग घ च छ – **स्वरूपेत्यादीनि** उपलभ्यते, ख – **स्वरूपेत्यादीनि** नोपलभ्यते।
3. क ग घ च छ – **रूपैः**, ख – **पुरुषैः**।
4. क घ च छ – **पाप०**, ख – **पापेन**, ग – **पापम्**।
5. ख घ – **आदि०** (**स्वत्व०** पश्चात्) उपलभ्यते, क ग च छ – **आदि०** नोपलभ्यते।
6. ख – **मुक्तेः** (**एवंरूपः प्राक्**) उपलभ्यते, क ग घ च छ – **मुक्तेः** नोपलभ्यते।
7. क ख ग च छ – **भुञ्जीय**, घ – **भुञ्जीयाम्**।

(सार्वकालिक) लय करता है। यहाँ निरोधपरम्पराजन्य संस्कार का दृढतरत्व 'जातिविशेषरूप' है (न कि व्यक्तिविशेषरूप)–ऐसा बताना भाष्यकार को अभिप्रेत है।

**शङ्का**–ज्ञान में ही संस्कारजनकता है अर्थात् ज्ञान ही संस्कार का उत्पादक होता है, ऐसा अनुभवसिद्ध है। **'निरोध'** तो ज्ञानरूप नहीं है, क्योंकि वह तो संस्कारशेष चित्त का अवस्थाविशेष ही है। अतः **'निरोध'** में संस्कारजनकता है अर्थात् निरोध संस्कारोत्पादक है, इसमें क्या प्रमाण है?

**समाधान**–ऐसी आशंका करके भाष्यकार बताते हैं–**'निरोधस्थितीति।'** **'निरोध'** की स्थिति में अर्थात् निरुद्धभूमिक चित्त की असम्प्रज्ञातावस्थिति में मुहूर्त्त, अहोरात्र, मासादिरूप क्रम से कालपरिमाण की जो वृद्धि परिलक्षित होती है, उससे निरोधावस्थाक चित्त में जायमान निरोधसंस्कार अनुमित होता है। अन्यथा असम्प्रज्ञात में संस्काराधिक्य के विना कालवृद्धि का नियामक (परिचायक) ही कोई नहीं बन पायेगा। सम्प्रज्ञातयोग की क्रमिक कालवृद्धि तो प्रज्ञाजन्य संस्कार के तारतम्य से ही उपपन्न हो जाती है, अतः सम्प्रज्ञात में संस्कारहेतुता नहीं है।

**शङ्का**–चरम असम्प्रज्ञात के द्वारा सम्प्रज्ञातसमाधिजन्य प्रज्ञासंस्कार का तो बाध (लय) हो सकता है किन्तु निरोधसंस्कारों का कैसे समुच्छेद (नाश) होगा? और निरोधसंस्कारों का समुच्छेद न होने पर साधिकार चित्त का मोक्ष कैसे उपपन्न हो सकेगा? अर्थात् निरोधसंस्कारविशिष्ट चित्त को मोक्ष प्राप्त न हो सकेगा? किञ्च योगीश्वर के संकल्पादि के द्वारा प्रलीन हुए प्रज्ञासंस्कारों की भी दग्धबीज के समान, कदाचित् पुनरुत्पत्ति (पुनरभिव्यक्ति) सम्भव हो सकेगी?

**समाधान**–भाष्यकार उपरिनिर्दिष्ट शंका का निराकरण करते हैं–**'व्युत्थाननिरोधेति।'** असम्प्रज्ञात की अपेक्षा समाधिप्रज्ञा भी व्युत्थानरूप है। अतः ज्ञानसामान्यरूप सम्प्रज्ञात को **'व्युत्थान'** तथा असम्प्रज्ञात को निरोधसमाधि कहते हैं। इन दोनों **'व्युत्थान'** और **'निरोध'** के प्रभाव से **'कैवल्यभागीय'** अर्थात् कैवल्य के हेतुभूत कर्मसंस्कारों से युक्त चित्त अपने मूलकारण नित्य **'प्रकृति'** में आत्यन्तिक लय को उसी प्रकार स्वतः प्राप्त होता है जिस प्रकार भस्मीभूत (दग्ध) काष्ठ में अग्नि की प्रच्छन्नता अर्थात् अग्नि का नष्ट हो जाना। चित्त का यह लयत्व उसके परिणामस्वभाव के कारण है। अब चित्त का पुरुषार्थ (उस पुरुष के प्रति भोग-मोक्ष-सम्पादन) समाप्त हो जाने के कारण उसमें अपने स्वामी पुरुष के भोग का हेतुभूत विसदृशपरिणाम पुनः होता ही नहीं है। अथवा भाष्यगत **'कैवल्यभागीय'** पद को **'चित्त'** का विशेषण मानकर यह अर्थ किया जा सकता है कि **'कैवल्यभागीय'** अर्थात् कैवल्यपर्यन्त स्थायी रहने वाले व्युत्थानसंस्कारों के साथ चित्त का अपने मूलकारण प्रकृति में लय हो जाता है। इस सूत्र के द्वारा पूर्वकृत शंका का निराकरण हो जाता

है, इसी तथ्य का भाष्यकार उपपादन करते हैं—**'तस्मादिति।' 'तस्मात्'** अर्थात् निरोध-संस्कार का भी क्षय हो जाने से ये निरोधसंस्कार चित्ताधिकार के विरोधी हैं, न कि चित्तस्थिति के हेतु हैं।

**शङ्का**—ठीक है, सम्प्रज्ञात तथा असम्प्रज्ञातरूप योगद्वय से चित्त का आत्यन्तिक (सार्वकालिक) लय होना माना जाय, फिर भी इत्थंभूत चित्तलयता से कौन सा पुरुषार्थ सिद्ध होता है? अर्थात् चित्त का आत्यन्तिक लय होने से पुरुष का कौन सा प्रयोजन सिद्ध होता है?

**समाधान**—ऐसी आकांक्षा होने पर भाष्यकार बताते हैं—**'यस्मादित्यादि।'** इस अवस्था में चित्त अवसिताधिकार हो जाता है। अत: कैवल्यभागीय संस्कारों के साथ वह निवृत्त हो जाता है। चित्त के निवृत्त (आत्यन्तिक लय को प्राप्त) होने पर पुरुष **'मुक्त'** कहलाता है। 'पुरुष' क्यों **'मुक्त'** कहलाता है, इसमें हेतुगर्भविशेषण पद हैं—**'स्वरूपेत्यादीनि।'** अर्थात् **स्वरूपमात्रप्रतिष्ठ:,शुद्ध:** तथा **केवल:।' 'स्वरूपमात्रप्रतिष्ठ'** शब्द का अर्थ है—प्रतिबिम्बित दु:खादि धर्म वाले चित्त के रूपों से पुरुष का मुक्त होना। **'शुद्ध'** शब्द का अर्थ है—(**स्वस्वामिशक्त्यो: स्वरूपोपलब्धिहेतु: संयोग:** २/२३ सूत्र में वक्ष्यमाण तथ्य को ध्यान में रखकर बतलाया जा रहा है कि) **'स्वत्वसम्बन्ध'** अर्थात् **'स्वामी'** पुरुष के प्रति **'स्व'** रूप से सम्बन्ध के कारण होने वाले चित्तनिष्ठ पुण्य-पापादि धर्मों से पुरुष का रहित होना। संसार-दशा में कूटस्थ पुरुष में भी भोगसाधनत्व की उपपत्ति के लिये ही (कल्पित) स्वत्व को स्वीकार किया गया है। इस प्रकार के औपाधिक स्वत्व की मुक्ति से ही पुरुष का शुद्धत्वरूप साध्यत्व निष्पन्न (उपपन्न) होता है। **'केवल'** शब्द का अर्थ है—औपाधिक संयोगाख्य बन्ध से मुक्त होना। इस प्रकार का मोक्ष ही (पुरुष का अपने शुद्ध तथा केवल स्वरूप में प्रतिष्ठित होना ही) योग का मुख्य फल (प्रयोजन) है। पारमार्थिक रूप से **दु:ख**, कर्मादि से युक्त होना अथवा लेपाख्य संयोगरूप सम्बन्ध वाला होना लोक में **'बन्ध'** कहलाता है और इस प्रकार के यथार्थ बन्ध से युक्त बुद्धि की ही मुक्ति होती है अर्थात् बुद्धि का ही यथार्थत: मोक्ष होता है, न कि कूटस्थ तथा असङ्ग पुरुष का बन्धन और मोक्ष होता है, यह बताने के लिये पुरुष को **'मुक्त'** कहा गया है। शास्त्रों में पुरुष की मुक्तता का प्रतिपादन व्यवहारमात्र के लिये किया गया है। जैसा कि कपिल ने सांख्यसूत्र में कहा है—**'वाङ्मात्रं न तु तत्त्वं चित्तस्थिते:'।** सूत्र का अर्थ है कि 'पुरुष में बन्धादि व्यवहारमात्र के लिये हैं, क्योंकि वे चित्त में ही वास्तविक रूप से अवस्थित रहते हैं।' और जो दु:खनिवृत्तिरूप पुरुषार्थत्व है वह पारमार्थिक ही है क्योंकि **'दु:खं मा भुञ्जीय'** अर्थात् 'मुझे दु:ख प्राप्त न होवे'—ऐसी प्रार्थना (सबकी) देखी जाती है।

**बालप्रिया–**

'शास्त्रेषु मुक्त इति व्यवहारमात्रं क्रियते'–तदर्थ सांख्यप्रवचनभाष्य द्रष्टव्य है– **'बन्धादीनां सर्वेषां चित्त एवावस्थानात् तत् पुरुषे वाङ्मात्रं सर्वं स्फटिकलौहित्यवत् प्रतिबिम्बमात्रत्वान्न तु तत्त्वं तस्य भावः। अनारोपितं जपालौहित्यवदित्यर्थः। अतो नोक्तविरोध इति भावः'** (१/५८)। भाव यह है कि 'बन्ध' आदि सम्पूर्ण वृत्तियाँ चित्त में ही अवस्थित रहती हैं, इसलिये 'पुरुष' के साथ उनका सम्बन्ध जोड़ना कहने भर के लिये है, वास्तविक नहीं है। जैसे स्फटिक में लौहित्य का दर्शन प्रतिबिम्बमात्र है, न कि वास्तविक। उसी प्रकार बन्धादि का अस्तित्व उस (पुरुष) में जपापुष्प के लौहित्य की तरह अनारोपित (वास्तविकरूप से) नहीं रहता, अपितु आरोपित रहता है, स्फटिक लौहित्य की तरह। इस प्रक्रिया से जब पुरुष का बन्ध वास्तविक नहीं है तो उसके 'मोक्ष' को वास्तविक कैसे कहा जा सकता है। इस प्रकार पुरुष का बन्ध और मोक्ष दोनों वाङ्मात्र हैं।

सम्प्रति, योगवार्त्तिककार व्यासभाष्य के प्रथमपाद की उपसंहारात्मक पंक्ति की व्याख्या करते हैं–

योगवार्त्तिकम्

**साङ्ख्यप्रवचन इति।** साङ्ख्यशास्त्रस्यैव प्रकर्षेण वचनं साङ्ख्यप्रवचनम्। **साङ्ख्ये ह्यभ्युपगमवादेनेश्वरं प्रतिषिध्यासम्प्रज्ञातयोगनैरपेक्ष्येण च जीवतत्त्वज्ञानादेव मोक्ष उक्तः, अस्मिंस्तु शास्त्रे निरुपद्रवासन्दिग्धैच्छिकमुक्तिनियमाय परमेश्वरविद्या, आशुमोक्षहेतुरसम्प्रज्ञातयोगश्च प्रदर्शित इति भावः॥५१॥**

**इति श्रीपातञ्जलभाष्यवार्त्तिके श्रीविज्ञानभिक्षुनिर्मिते प्रथमः समाधिपादः॥१॥**

---------------xxx--------------

**'सांख्यप्रवचन इति।'** सांख्यशास्त्र के सिद्धान्तों का ही प्रबलतापूर्वक अर्थात् मुख्यरूप से प्रतिपादन करना **'सांख्यप्रवचन'** कहलाता है। चूँकि सांख्य के सिद्धान्तों का ही समर्थक एवं प्रतिपादक यह योगशास्त्र है अतः इसे **'पातञ्जलसांख्यप्रवचन-योगशास्त्र'** कहते हैं।

योगवार्त्तिककार दोनों शास्त्रों के मौलिक अन्तर को स्पष्ट करते हैं–सांख्यदर्शन में अभ्युपगमवाद से ईश्वर में उपादानकारणता का प्रतिषेध करके असम्प्रज्ञातयोग की अपेक्षा के विना ही **'जीवतत्त्वज्ञान'** से ही मोक्ष की प्राप्ति बताई गई है। जब कि योगशास्त्र में निरुपद्रव, असन्दिग्ध तथा ऐच्छिक मुक्ति को साधने (सिद्ध करने) के लिये परमेश्वर विद्या (ईश्वरप्रणिधान) तथा आशुतर मोक्ष के हेतुभूत असम्प्रज्ञात योग को प्रदर्शित किया गया है॥५१॥

*इस प्रकार श्रीविज्ञानभिक्षुनिर्मित श्रीपातञ्जलभाष्यवार्त्तिक पर लिखी गई **'सपाठभेद बालप्रियाख्य'** हिन्दी व्याख्या का यह प्रथम समाधिपाद है॥१॥*

---------------xxx--------------